# सावित्रीचरित्रम्।

## छायानाटकम्।

महाराजश्रीरवाजिराजस्य तत्पत्न्या बाईश्री

मोंघीवासंज्ञायाश्च निदेशात्

महाराजश्रीवाघजिद्विजयराज्ये

मयूरध्वजपुरे

भट्टमाहेश्वरात्मजेन शंकरलालेन विरचितं।

तच्च मुंबापुरे

निर्णयसागरे विश्वनाथकेशवलालाभ्यां मुद्रापितं

नदाग्निनवेंदुमितवर्षीयाश्विनशुक्लदशम्यां गुरौ ॥

मौल्यं १।

ग्रामांतरस्थेभ्यः १।=

श्रेयः प्रेमरसालसाक्षिनलिनश्रीराजराजेश्वरी-
श्लिष्टांगः शशिशेखरः स दिशतु श्रीराजराजेश्वरः ।
यस्येषत्करुणेक्षणादपि भवेद्रंकोपि पंकोज्झितो
निःशंको नरपालमौलिमणिभिर्नीराजितांघ्रिद्वयः ॥ १ ॥

निर्व्याजभक्तिसंप्राप्तशंभुसायुज्यमुक्तयः ।
जयंति मे सद्गुरवः श्रीमत्केशवशास्त्रिणः ॥ १ ॥



# अर्पणपत्रमिदम्।

वाईश्री ७ मोंघीवा !

पतिभक्तिं पतिप्रेम पतिव्रतरतात्मताम् ।
पतिव्रताचरित्रेषु प्रीतिमप्रतिमामपि ॥ १ ॥

दयामयाशयत्वं च विवेकार्जवशालिताम् ।
उपकारानसंख्येयान् निर्व्याजं मयि निर्मितान् ॥२॥

धर्मकर्मरुचिं चित्रां पवित्रां च तथा मतिम् ।
वीक्ष्यापि निस्तुलतमामुदाराशयतां च वः ॥ ३ ॥

सावित्रीचरिताभिख्यं छायानाटकमल्पकम् ।
समर्पयति युष्मभ्यमुपायनमयं जनः ॥ ४ ॥

महाराजश्रीरवाजिराजपाठशालाशास्त्रिणो
भट्टमाहेश्वरसूनोः शंकरलालस्य विज्ञप्तिरियं ।

नां सद्भाग्यवशात्तादृशं सुदिनं तर्हि संति सहस्रशः पुंसां पठ
ठनार्हाणि काव्यानि नाटकानि कथाः कथानकानि च विरल
पुनः सत्कुलकामिनीनां पठनपाठनार्हाणीति । अनंतरं च व्यरच
च्छायानाटकं यदादिमश्लोकादारभ्यांतिमश्लोकपर्यंतं निजौरसपु
निर्विशेषीकृतधर्मपुत्रीनिकरेभ्यः सद्गुरुवरेभ्यः पठंतीनां शृण्वं
विचारयंतीनां च सौशील्यवसतीनां सतीनां चेतांसि म्लानि
जुगुप्सां वा नोपयास्यंति तदर्थैर्विद्वद्भिर्मान्यैर्महाकविभिः सद्भा
न्याभिः कुलकन्याभिः पातिव्रत्यशालिनीभिः कुलकामिनीभि
दितोंतपर्यंतं विलोकनीयमेतदिति प्रथमा प्रार्थना ।

समुल्लसंत्येव कोटिशः प्राचीनैरर्वाचीनैश्च सत्कविचिंतामणि
निर्मितानि सदुपदेशामृतमयानि परिस्फुरदैहिकामुष्मिकश्रेयश्च
नि संप्राप्तपरमाभ्युदयानि परिपूर्णपरिपाकमृदुलतममृद्वीकामृदीय
पचेलिमतममोचाफलमधुरिमावलेपलोपपरिपाटीपटीयांसि निरव
माधुर्यधुर्यसुधारसस्वादीयांसि मनोवचोविलासदवीयांसि निरं
प्रतिमतमरससंदोहनिष्पंदानि समुच्छलदमंदानंदकंदानि काव्
थाकथानकचंपूनाटकादिवृंदानि पीयूषपूरमतिस्पर्द्धिभिश्च येषां
प्रसरैः पूर्णानि निरवकाशलेशानि च सकलसागरांबरावलयवि
णायमानगुणगणानां काव्यरत्नपरीक्षणचणानां विद्वद्गणानामंत
रणानीति जानन्नपि शौर्यौदार्यदयादाक्षिण्यधैर्याद्यनेकसद्गुणरत्
त्नाकरश्रीमन्मयूरध्वजपुरपुरंदरमहाराजश्रीरवाजिराजाज्ञापरतं
या स्वल्पज्ञः स्वल्पप्रज्ञोपि बालभावसुलभं लाघवमवलंब्य यां
न्निचरीकरांचकार मतिचापलं जनोयं तत्सर्वं सर्वंसहासहाध्या

स्वांतवंतः संतः सहिष्यंतेत्र भवंतो भवंन इत्याशास्ते ।

कोहं वराकोऽनधिगतपाणिनीयपारावारपारोऽनाकलितरसालंकारशास्त्रसारोऽपरिचितदृश्यकाव्यलक्षणव्यवहारो निबद्धुमेकमपि पद्यं पादं पदं वा ।

सत्यप्येवं यथाकथंचिदरसमलक्षणमशब्दसौष्ठवमप्येतत्सावित्रीचरित्रंनाम छायानाटकं यदहं व्यरचं सोऽयं महिमा हिमाचलसुताकांतचरणसरोजलीनस्वांतमिलिंदानां करुणामृतवरुणालयानां वागीश्वरीलीलानिलयायमानमानसानां पश्चिमदिग्ललनाललामलीलायमानानां श्रीसद्गुरूणां मे केशवशास्त्रिणां तातचरणानां च मे परममाहेश्वराणां भट्टमाहेश्वराणां दयादृगवलोकलवलहरीणामेव जरीजृंभीति। अथवा मज्जाम्येवमपि जल्पन् लज्जाजलधौ । यतः

कृपा क्व वर्षिणी तेषां सुधासारकिरां गिराम् ।
निःसारा नीरसा चैषा क्व च मेल्पधियः कृतिः ॥

इत्यशंकं जानंतमपि मां बलान्मुखरयत्येवं वक्तुं तच्चरणार्णोजलग्ना भक्तिर्मे ।

अस्मिंश्च नाटके स्थले स्थले प्रमादस्खलितानि मे मतिमांद्याद्भ्रांतिवशाद्विस्मृतिवशान्मुद्रणावसरे मदसंन्निधानाल्लेखकलेखप्रमादाद्वा समुत्पन्नानि महाशयशिरोमणिभिरगण्यगुणगणिभिर्विपश्चिच्चिंतामणिभिः क्षंतव्यानि ।

छायानाटकस्य चास्य परिशोधने पाणिनीयपारावारपारीणप्रज्ञैः परमदयार्द्रहृदयैः खाडिलकरोपनामभिः श्रीमद्विरात्माराम ( आपा ) शास्त्रिभिः स्वकीयाप्रतिमसौजन्यजन्यधन्यतानिधानैः शास्त्र-

श्रेयः प्रेमरसालसाक्षिनलिनश्रीराजराजेश्वरी-
श्लिष्टांगः शशिशेखरः स दिशतु श्रीराजराजेश्वरः ।
यस्यैपत्करुणेक्षणादपि भवेद्रंकोपि पंकोज्झितो
निःशंको नरपालमौलिमणिभिर्नीराजितांघ्रिद्वयः ॥ १ ॥

निर्व्याजभक्तिसंप्राप्तशंभुसायुज्यमुक्तयः ।
जयंति मे सद्गुरवः श्रीमत्केशवशास्त्रिणः ॥ १ ॥



# अर्पणपत्रमिदम्।

बाईश्री ७ मोंघीबा !

पतिभक्तिं पतिप्रेम पतिव्रतरतात्मताम् ।
पतिव्रताचरित्रेषु प्रीतिमप्रतिमामपि ॥ १ ॥

दयामयाशयत्वं च विवेकार्जवशालिताम् ।
उपकारानसंख्येयान् निर्व्याजं मयि निर्मितान् ॥२॥

धर्मकर्मरुचिं चित्रां पवित्रां च तथा मतिम् ।
वीक्ष्यापि निस्तुलतमामुदाराशयतां च वः ॥ ३ ॥

सावित्रीचरिताभिख्यं छायानाटकमल्पकम् ।
समर्पयति युष्मभ्यमुपायनमयं जनः ॥ ४ ॥

महाराजश्रीरवाजिराजपाठशालाशास्त्रिणो
भट्टमाहेश्वरसूनोः शंकरलालस्य विज्ञप्तिरियं ।

॥ श्रीगणेशाय नमः ॥

# प्रस्तावना ।



यां विना नैकमर्थं वाप्यक्षरं लिखितुं जनः ।
शक्तस्तामीशकरुणामनुक्षणमुपास्महे ॥ १ ॥

अयि आर्या विद्वांसो मान्या महाकवयः पवित्राणि मित्राणि निःसीमसौशील्यप्रसाराः प्रियस्वसारश्च ! अभिनवकविताविलोकनकौतुकिना महाराजश्रीरवाजिराजेन राजधर्मपुंधर्मस्त्रीधर्मप्रधानान् प्रबंधान् निबद्धुमाज्ञप्तोयं जनो व्यचिंतयच्चिरं चेतसा संति किलानेके तादृशाः प्रबंधाः परमनुल्लंघनीया राजाज्ञेति किमपि रचनीयं चेत्प्रथमं स्त्रीधर्मप्रधानमेव रचनीयं यतः प्रतिदिनमेधमानप्रचंडप्रतापतापितारातिव्रातायाः हेलामात्रनिर्जितनिखिलमहीमहेलाया निजप्रजाभिपालनाभिलालनाभिपोषणप्रबद्धबुद्धेः श्रीविक्टोरियासंज्ञाया महाराज्ञ्याः सौराज्यप्रभावेण योल्लसंति परितः प्रतिपुरं प्रतिपत्तनं प्रतिपुटभेदनं च विद्यालयानि पुस्तकालयानि कन्याशालाश्च नानादिग्देशभापालबालपालीषु पुनः पल्लविता इव नयनान्यानंदयंति विद्यालताः मन्ये च क्रमेण परमदयालोः परमेश्वरस्य प्रसादात्कल्याणीं गीर्वाणवाणीमपि परिशीलयिष्यंति प्रतिक्षणमुज्जृंभमाणप्रेमप्रसरा नरा नार्यश्च यदि भविष्यति भारतीयप्रजा-

नां सद्भाग्यवशात्तादृशं सुदिनं तर्हि संति सहस्रशः पुंसां पठनपाठनार्हाणि काव्यानि नाटकानि कथाः कथानकानि च विरलानि पुनः सत्कुलकामिनीनां पठनपाठनार्हाणीति । अनंतरं च व्यरचदेतच्छायानाटकं यदादिमश्लोकादारभ्यांतिमश्लोकपर्यंतं निजौरसपुत्रीनिर्विशेषीकृतधर्मपुत्रीनिकरेभ्यः सद्गुरुवरेभ्यः पठंतीनां शृण्वंतीनां विचारयंतीनां च सौशील्यवसतीनां सतीनां चेतांसि ग्लानिं व्रीडां जुगुप्सां वा नोपयास्यंति तदर्थैर्विद्वद्भिर्मान्यैर्महाकविभिः सद्गुणधन्याभिः कुलकन्याभिः पातिव्रत्यशालिनीभिः कुलकामिनीभिश्चादितोंतपर्यंतं विलोकनीयमेतदिति प्रथमा प्रार्थना ।

समुल्लसंत्येव कोटिशः प्राचीनैरर्वाचीनैश्च सत्कविचिंतामणिभिर्निर्मितानि सदुपदेशामृतमयानि परिस्फुरदैहिकामुष्मिकश्रेयश्रयानि संप्राप्तपरमाभ्युदयानि परिपूर्णपरिपाकमृदुलतममृद्वीकामृदीयांसि पचेलिमतममोचाफलमधुरिमावलेपलोपपरिपाटीपटीयांसि निरवधिमाधुर्यधुर्यसुधारसस्वादीयांसि मनोवचोविलासदवीयांसि निरंतराप्रतिमतमरससंदोहनिष्पंदानि समुच्छलदमंदानंदकंदानि काव्यकथाकथानकचंपूनाटकादिवृंदानि पीयूषपूरप्रतिस्पर्द्धिभिश्च येषां रसप्रसरैः पूर्णानि निरवकाशलेशानि च सकलसागरांबरावलयविभूषणायमानगुणगणानां काव्यरत्नपरीक्षणचणानां विद्वद्गणानामंतःकरणानीति जानन्नपि शौर्यौदार्यदयादाक्षिण्यधैर्याद्यनेकसद्गुणरत्नरत्नाकरश्रीमन्मयूरध्वजपुरपुरंदरमहाराजश्रीरवाजिराजाज्ञापरतंत्रतया स्वल्पज्ञः स्वल्पप्रज्ञोपि बालभावसुलभं लाघवमवलंब्य यत्किंचिच्चरीकरांचकार मतिचापलं जनोयं तत्सर्वं सर्वंसहासहाध्यायि-

स्वांतवंतः संतः सहिष्यंतेत्र भवंतो भवन इत्याशास्ते ।

कोहं वराकोऽनधिगतपाणिनीयपारावारपारोऽनाकलितरसालंकारशास्त्रसारोऽपरिचितदृश्यकाव्यलक्षणव्यवहारो निबद्धुमेकमपि पद्यं पादं पदं वा ।

सत्यप्येवं यथाकथंचिदरसमलक्षणमशब्दसौष्ठवमप्येतत्सावित्रीचरित्रंनाम छायानाटकं यदहं व्यरचं सोऽयं महिमा हिमाचलसुताकांतचरणसरोजलीनस्वांतमिलिंदानां करुणामृतवरुणालयानां वागीश्वरीलीलानिलयायमानमानसानां पश्चिमदिग्ललनाललामलीलायमानानां श्रीसद्गुरूणां मे केशवशास्त्रिणां तातचरणानां च मे परममाहेश्वराणां भट्टमाहेश्वराणां दयार्द्रगवलोकलवलहरीणामेव जरीजृंभीति। अथवा मज्जाम्येवमपि जल्पन् लज्जाजलधौ । यतः

कृपा क्व वर्षिणी तेषां सुधासारकिरां गिराम् ।
निःसारा नीरसा चैषा क्व च मेल्पधियः कृतिः ॥

इत्यशंकं जानंतमपि मां बलान्मुखरयत्येवं वक्तुं तच्चरणाणोंजलग्ना भक्तिर्मे ।

अस्मिंश्च नाटके स्थले स्थले प्रमादस्खलितानि मे मतिमांद्याद्भ्रांतिवशाद्विस्मृतिवशान्मुद्रणावसरे मदसंनिधानाल्लेखकलेखप्रमादाद्वा समुत्पन्नानि महाशयशिरोमणिभिरगण्यगुणगणिभिर्विपश्चिच्चिंतामणिभिः क्षंतव्यानि ।

छायानाटकस्य चास्य परिशोधने पाणिनीयपारावारपारीणमज्ञैः परमदयार्द्रहृदयैः खाडिलकरोपनामभिः श्रीमद्भिरात्मारामं ( आपा ) शास्त्रिभिः स्वकीयाप्रतिमसौजन्यजन्यधन्यतानिधानैः शास्त्र-

ज्ञातामणयिनीमबद्धावधानै राजदुर्गपुरवासिभिः श्रीमन्महीधरशास्त्रिणां तनूजैः श्रीजीवनरामशास्त्रिभिः सकलशब्दशास्त्रजलधितलस्पर्शिभिः श्रीभावनगरनिवासिभिर्भट्टावटंकहरिशंकरात्मजैः श्रीभानुशंकरशास्त्रिभिश्च मयि निर्निमित्तां निष्प्रतिमां च करुणादृशं विधाय भूयान् श्रमः स्वीकृतोस्ति ततो न तेषां यावज्जीवमुपकारभारमहं विस्मरिष्यामि । पूरयतु च तेषां सर्वेषां मनोभिलाषान् परमेश्वरोपर्णाप्राणवल्लभ इति प्रार्थना मे ।

छायानाटकं ह्येतन्महाराजश्रीखाजिराजाज्ञया निर्मितं तदीयार्द्धांगरूपया च बाई श्रीमोंघीबासंज्ञया तत्पत्न्या मुद्रापितमिति कारणद्वयेन महाराजखाजिराजस्य चित्रफलकं गुरुचरणानां च निर्निमित्तनिःसीमनिष्प्रतिमप्रेमावलोकलहरीपरंपरामात्रनिदानमेतदखिलमिति तेषां चात्र चित्रफलकं तत्तदुपकारस्मरणोत्तरक्षणोत्पन्नतत्तद्दर्शनोत्कंठासमकालएव तत्तद्दर्शनानंदानुभवाय स्थापितं । मन्ये च चित्रद्वयमेतत्संप्रेक्ष्य प्रेक्षावतां प्रथमे निःशंकमनुभविष्यंति न सरूपाः पापसमाचारा भवंति । आकृतिर्गुणान् कथयति । यत्राकृतिस्तत्रगुणा लसंति । पार्वति पापवृत्तये न रूपम् । इत्याद्यानां माक्तनजनसदुक्तीनामव्यभिचारसारशालित्वमिति ।

किंचास्मिन्नाटके श्रूयमाणे विलोक्यमाने विचार्यमाणे च कचित्परमेश्वरप्रसादादेवाविर्भूतं कचिद्वाग्देवताप्रतापादेव प्रादुर्भूतं कचिद्गुरुवराणां करुणयैव निष्पन्नं कचिद्भगवत्या महासत्याः सावित्र्याः पवित्रचरित्रप्रभावादेवोद्भूतं कचिच्च नानाविधरसभरभरितानां निजनिजलोचनानां संयोगान्नीरसेपि चंद्रकांतशकले सरसतराणां चंद्र-

कराणां संयोगादिव तत्क्षण एव निःसृतं वा निरवद्यं हृद्यं रसमा-स्वाद्यास्वाद्य यं कमप्यमंदमानंदमनुभवेयुः सदयाः सहृदया यं कमपि सद्बोधं गृह्णीयुः सारग्राहिणो गृहिणो यं कमपि स्वधर्ममनु-सरेयुश्च सत्यः कुलयुवत्यस्तत्पुण्यफलानि समनुभवंतु परमशि-मसायुज्यमुक्तिभाजः श्रीकेशवशास्त्रिशर्माणो गुरुचरणा मे परमोप-कारिणोऽगण्यपुण्यप्राप्तकैलासवासा महाराजश्रीरत्नाजिराजसंज्ञाश्च।

महाराजश्रीरत्नाजिपाठशालैकशास्त्रिणा ।
इति शंकरलालेन प्रार्थ्यते परमेश्वरः ॥ १ ॥

---

यो वेदनागवसुभूमिमिते शुभेब्दे*
पक्षेसिते नभसि मासि तिथौ शिवायाः ।
संप्राप जन्म पृथुराजमहीमहेलात्
सोयं जयत्वचलकीर्तिरिलाविलासी ॥ १ ॥
विद्याविवेकसहिता अधिगम्य हृद्याः
सौजन्यजन्यमपि चारु यशः प्रसार्य ।
यो हर्षमग्नमकरोत्पितरं गुणैः स्वैः
सोयं जयत्वचलकीर्तिरिलाविलासी ॥ २ ॥
यो नेत्रपूर्णरसचंद्रमिते शुभेब्दे†
पौषाद्यपक्षलसिते च तिथौ द्वितीये ।
राज्याभिषेकमहमन्वभवत्कृतज्ञः
सोयं जयत्वचलकीर्तिरिलाविलासी ॥ ३ ॥
येन प्रजा त्विह निजा समलाल्यपालि

---

* सं० १८८४.   † सं० १९०२.

प्रेम्णाम्पयोधि च निजौरसनिर्विशेषम् ।
नैपुण्यपुण्यनिलयेन दयामयेन सोयं जय० ॥ ४ ॥
यो व्याघ्रजित्यमलसद्गुणशालिशीले
जाते सुते निगमचंद्ररसेंदुसंख्ये* ।
वर्षे परां मुदमवाप शिवप्रसादात्सोयं ज० ॥ ५ ॥
जातेथ सद्गुणगणैकनिधौ कुमारे
सौशील्यभूषणधरे हरभीमसिंहे ।
पुत्रद्वयं समवलोक्य मुमोद यो वा सोयं जय० ॥ ६ ॥
यः पार्वतीपतिपदांबुरुहैकबंधुः
सौजन्यसिंधुरखिलस्पृहणीयशीलः ।
चित्तान्यरंजयदहो विदुषां गुणैः स्वैः सोयं जय० ॥ ७ ॥
कैलासवासमुपसाद्य रसाक्षिनंद-
क्ष्मासंमितेब्द † इह माधवलक्षपक्षयाम् ।
योऽशोदयत्कविवरान् गुणिनो गुणज्ञान् सोयं० ॥ ८ ॥
अद्यापि यः स्मृतिपथातिथितां प्रयात-
स्तत्सद्गुणानुभविनां नयनांबुजेभ्यः ।
धारा प्रवर्षयति संततबाष्पवारां सोयं जय० ॥ ९ ॥
औदार्यशौर्यनिलयस्य गुणज्ञमौले
र्यस्याज्ञया विरचिता कविता मयेयम् ।
यश्चाजरामरपदं यशसा प्रयातः
सोलं जयत्वचलकीर्तिरयं रवाजिः ॥ १०

---

* सं० १९१४.   † सं० १९२६.

ये शैलराजतनयाहृदयाधिनाथ-
पादारविंदयुगलुब्धमनोमिलिंदाः ।
सर्वस्वमस्य च जनस्य मनोनिधेयें
तेमी जयंति सततं गुरवोस्मदीयाः ॥ १ ॥
यान् वा दयामृतमयान् हृदयाधिनाथान्
संप्राप्य सद्गुणवती वरवर्णिनीयम् ।
शास्त्रज्ञता स्वमिह धन्यतमं त्वमंस्त तेमी० ॥ २ ॥
यैः पश्चिमाहरिदियं बुधरत्नभूमि-
र्यैरेव नूतनपुरी लघुकाशिकेति ।
संगीयते सुकवितापि च यैः सजीवा तेमी० ॥ ३ ॥
प्राज्यं समर्थ्य निगमागमविश्वराज्यं
येभ्यः प्रसन्नहृदयाजनि वागधीशा ।
येभ्यः प्रणामनिकरश्च विधीयते ज्ञैस्तेमी० ॥ ४ ॥
येभ्योखिलागमसुधांबुनिधिभ्य एते
संप्राप्य वागमृतमाप्तमहामहास्ते ।
सर्वत्र भांति विबुधा वसुधासुधाशास्तेमी० ॥ ५ ॥
येषां दयादृगवलोकलवप्रभावात्
संजायतेत्रजडधीरपि हृद्यविद्यः ।
शास्त्रज्ञताप्रणयिनीप्रणयैकपात्रं तेमी० ॥ ६ ॥
येषु प्रसन्नहृदयेषु दयामयेषु
मृद्वीकया च सितया सुधया च सार्द्धम् ।
स्पर्द्धाकरी भवति सत्कविता नराणां तेमी० ॥ ७ ॥

मंदोपि मंदतरधीरपि सर्वशास्त्र—
पीयूषसिंधुपरिशीलनशांतचित्तः ।
संजायते सपदि यत्करुणावलंबी तेमी० ॥ ८ ॥
यद्यत्रतत्र परिशीलितपाणिनीयो
यद्यत्रतत्र परिचिंतितगौतमीयः ।
बालोपि नूतनपुरे स च यत्प्रभावस्तेमी० ॥ ९ ॥
यद्योपि कोपि नगरे किल यत्रतत्र
मृद्वीं मनोहरतरां कवितां करोति ।
येषां च सोपि करुणाकणिकाप्रभावस्तेमी० ॥ १० ॥
शास्त्रज्ञतां सुकवितां च सुकीर्तिमत्तां
सद्यः समर्पयितुमस्ति निबद्धकच्छः ।
एकोपि यच्चरणयो रचितः प्रणामस्तेमी० ॥ ११ ॥
येषामसीमकरुणार्णववर्णनेषु
प्रज्ञा तथैव मम पंगुतरा रसज्ञा ।
ये चात्मजाधिकधियो निजशिष्यवर्गे तेमी० ॥ १२ ॥
तेमी जटाद्यपदशंकरनाम्नि नित्यं
जाड्यैकधाम्न्यपि च शंकरलालनाम्नि ।
दीने दयामृतमयाशयिनो भवंतु
श्रीकेशवाख्यगुरवो निजधर्मपुत्रे ॥ १३ ॥



सावित्री – प्रतिज्ञापूर्वमिमां स्वयंवरणमालामस्मै हृदयसर्वस्वाय प्राणप्रियायार्पयामि। पृष्ठ १२२



सावित्री– अयि प्राणनाथ। क्वासि! हा एकपत्नीव्रत पवित्रकीर्ते भगव-
न् सत्यवन्! कथं प्रतिवचनमपि न वितरसि! पृष्ठ २९७



सत्यवान्– अयि प्राणप्रिये सावित्रि! कासि? मंदभाग्यममुं जनं विहाय क्वगतासि! देहिमे दर्शनं। पृष्ठ ३००.



गौतम.– पश्यंतु यूयं सर्वेऽपि साश्चर्यी- ति पुर-नरम्। सावित्र्या लंबितो बल एष आयाति सत्यवान्॥६१॥ पृष्ट ३०८

सत्यवान्– भिये। स्वस्थोऽस्मि सांप्रतं मुंचमां एते तपोवनवासिभि र्मुनिभि सह तातपादा दृश्यंते॥ पृष्ट ३०९.

श्रीगणेशाय नमः ॥

# सावित्रीचरित्रनाटकम् ॥



गौरीशंभोः परिणयविधौ दृष्टिरन्योन्यरूपा-
लोके लुब्धा प्रणयसरसान्योन्यतो लज्जमाना ।
अन्योन्येक्षाप्रसरमसकृद्वंचयित्वा मिथोपि
प्रेम्णा रूपामृतमविरतं संपिबंती श्रिये स्तात् ॥ १ ॥
हृद्यां विद्यां प्रदद्यान्मे स्वच्छः प्रकृतिकोमलः ।
श्रुतिसेवी सरस्वत्या दयाद्ग्लेशदेशिकः ॥ २ ॥
धृत्वा धृत्वा हृदि गिरिसुताप्राणनाथांघ्रिपद्मं
नत्वा नत्वा सदयहृदयान् सद्गुरून्केशवाख्यान् ।
स्मृत्वा स्मृत्वा परशिवपदालंबिनस्तातपादान्
धर्तुं प्रेम्णा स्पृहयति करे लेखिनीं स्वां जनोयम् ॥ ३ ॥

( नांद्यंते सूत्रधारः । )

सूत्रधारः-

चित्रेभ्योतिपवित्रेभ्यो मित्रेभ्योतिचिरायुषाम् ।
अयं सतीचरित्रेभ्यः प्रणामकुसुमांजलिः ॥ ४ ॥

(पुष्पाणि परितो विकीर्य।) अलमलमेतावता। कौतूहलाव-
लोकनोत्कंठितानां सभासदां भवदुक्तयो मांतरायभूता भवं-

तु। (स्वगतं साश्चर्यं।) अहो संगीतशाला कथमद्यापि शून्यैव दृश्यते। (नेपथ्याभिमुखमवलोक्य।) अयि प्रिये! इतस्तावत्।

नटी– (प्रविश्य।) एषास्म्यार्यपुत्र! किमाज्ञापयसि।

सूत्रधारः– प्रिये! इयतैव विस्मृतिमुपगतं किं भवत्याः।

नटी– नाथ! किं तत्।

सूत्रधारः– यदद्य महासत्योनसूयारुंधतीलोपामुद्राप्रभृतयः स्वकीयप्राणप्रियैः समेताः सावित्रीपवित्रचरित्रप्रेक्षणकप्रेक्षणायागमिष्यंति।

नटी– (सनिश्वासं।) ततस्ततः।

सूत्रधारः– अतः सर्वैः स्वाः स्वा भूमिका निष्प्रमादमभिनेतव्या इति यन्मयोक्तम्।

नटी– प्राणनाथ! स्मृतिपथमागतमद्य तन्मे।

सूत्रधारः– तर्हि त्वमपि समयानुरूपसंगीतेन रंजय सभ्यजनमनांसि।

नटी– यथाज्ञार्यपुत्रस्य। (इत्युक्त्वा गायति।)

कदंबं कंकेलिः सरलप्रियमेलालवलिका
प्रफुल्ला मल्लीयं श्रयति तिलकं यत्तदुचितम्।
रसाले बालेस्मिन् दलितमृदुमूलेतिरुचिरे
विलीना वासंती हरिहरि हतेयं तु विधिना॥ ५॥

सूत्रधारः– (स्वगतं।) अहो मनोहरेणामुना संगीतेन विकसितानि सभ्यानां मुखकमलानि। परं मम प्राणप्रियाया मुखं त्वतीव म्लानं दृश्यते। पतंति च नेत्राभ्यामश्रुधाराः।

कीदृशमिदमाश्चर्यं कीदृशमिदं कौतुकं च । (प्रकाशं) प्रिये ! अमंदानंदसंदोहमयेस्मिन् समये किं निदानमौदास्यदास्यमंगीकर्तुं ते ।

नटी– नाथ ! न किंचिदन्यत् । केवलं कश्चिद्विचारः स्मृतिपथमारूढ एतादृशौदास्यहेतुर्बभूव ।

सूत्रधारः– प्रिये ! तादृशस्तु कोस्ति विचारो येन महोत्सवमयेस्मिन् समये विघ्न आविष्कृतः ।

नटी– प्राणनाथ ! आवयोः पवित्रा पुत्री चंद्रभागा चंद्रसेनं विहाय नान्यं वरं वरिष्यते ।

सूत्र०– एवं खलु । विद्यया विनयेन गुणैश्चातुर्येण च योग्यतमं चंद्रसेनं विहाय नाहमप्यन्यस्मै तां दातुमिच्छामि ।

नटी– प्राणनाथ ! युक्तं खलु भवदुक्तं निखिलं चंद्रभागाया योग्यः सर्वैः प्रकारैश्चंद्रसेन इति । परं व्यतीतायां तमिस्रायां नयनयोरतिथिरभून्मे कश्चिन्महान् मुनींद्रः ।

सूत्र०– ततस्ततः ।

नटी– नैतावदेव । मया विहितसत्कारः स मुनिप्रवरः सिंहासनमधिरुह्य वर्णयामास वत्सस्य चंद्रसेनस्यानेकान् गुणान् ।

सूत्र०– ततस्ततः ।

नटी–तदंते च यदुक्तं तेन भगवता तत्तु स्मृतमपि मे त्रासं जनयत्यद्यापि ।

सूत्र०– प्रिये ! ईदृशं किमुक्तं तेन तपोधनेन ।

नटी– प्राणनाथ ! तेनोक्तं अस्त्येकवत्सरमात्रमायुः शेषमपरि-

मितगुणगणस्य चंद्रसेनस्येति। श्रुत्वा चैतान्यक्षराणि मूर्च्छिताविव कर्णौ समाश्वासयितुमिव नेत्रे विहाय निद्रां भयचकिते सर्वतः परिबभ्रमतुः। परं न विषादविषाब्धिमंतरा किंचित् ददृशतुः। स एव विचार इदानीमप्येतस्यौदास्यस्य निदानतामभिवहति।

सूत्र०– (आकस्मिकखेदेन।)

किं कर्तव्यमिदानीं किं च न कर्तव्यमिति मूढः।
नृपतिरिवाश्वपतिः किल नारदवाक्याच्चवास्म्यहं वाक्यात्॥६॥

नेपथ्ये– जयतु जयतु महाराजाधिराजोऽश्वपतिः।

सूत्र०– (नेपथ्याभिमुखमवलोक्य।) प्रिये! स्मृतमात्र एव प्राप्तोयं राजाश्वपतिस्तदावां गृहं गत्वा विचारं कुर्वे।

(इति निष्क्रांतावुभौ।)

॥ इति प्रस्तावना ॥

(ततः प्रविशति कीर्तिसेननाम्ना प्रधानेनानुगम्यमानः सपरिवारो राजाश्वपतिः।)

अश्वपतिः– (प्रधानं विलोक्य।) प्रियमित्र कीर्तिसेन।

कीर्तिसेनः– आज्ञापयतु देवः।

अश्वपतिः– व्यतीतः किलैकः संवत्सर आर्येण शत्रुशल्येन वीरमित्रेण च सहेतो निजानुरूपं सत्कुलसंभवं च वरमन्वेष्टुं गताया वत्सायाः सावित्र्याः। तदिदानीं क्वास्ति तस्याः प्रवृत्तिः।

कीर्तिसेनः– (बद्धांजलिरुत्थाय।) महाराजाधिराज[illegible] प्र-

सादर्वाक् समागतमासीत्पत्रमेकं । तदाशयश्च निवेदित एव तदानीं यत्–

पूर्वस्यां ये नरपतिसुतास्ते तु सर्वेपि दृष्टा
दृष्टाश्चान्ये नयजयमया ये स्थिताः पश्चिमायाम् ।
दृष्टा हृष्टाः शुभगुणगणा दक्षिणा दक्षिणस्यां
सावित्र्या न कचिदपि परं प्रीतिमेत्यंतरात्मा ॥ ७ ॥

तदिदानीमुत्तरस्यामुत्तीर्णा वयमिति विज्ञाप्यं महाराजचरणेभ्यः । परं नेदानीं काचित्प्रवृत्तिरुपलब्धा । ततः कोपि महात्मानस्तद्विषये प्रष्टव्या यतस्ते सर्वत्राप्यकुंठितप्रसरया ज्ञानदृशा परावरमपि पश्यंति ।

अश्वपतिः– (दीर्घमुष्णं च निःश्वस्य।) कुलीन कीर्तिसेन ! अतिदुर्लभः खलु तादृशमहात्मजनदर्शनलाभो मादृशाल्पपुण्यशालिनां नराणां । शृणु–

आसीत्स कोपि समयो बहुहर्षवर्षी
पुण्यैरगण्यगणनैर्मम पूर्वजानाम् ।
यस्मिन् प्रतिक्षणमुपागतनारदादि–
देवर्षिदर्शनमभून्निखिलार्थसिद्ध्यै ॥ ८ ॥

नेपथ्ये– राजन् स एव समयोस्ति सुखैकहेतुः
पुण्यैरगण्यगणनैस्तव पूर्वजानाम् ।
आधीन एव हि जनो विनयैस्तवायं
चिंता न कापि भवता मनसा विधार्या ॥ ९ ॥

अश्वपतिः–अहो किं मुनिर्नारदः । (इत्यर्धोक्ते सगतं।)

स्मरणमभवदेव यावदेत-
त्रिदशमुनेरयमत्र तावदाप्तः ।
निरवधिकरुणानिधिस्तु तादृङ्
मुनिरपरो न हि कोप्यहो त्रिलोक्याम् ॥ १० ॥

(प्रकाशं) गच्छ कीर्तिसेन गच्छ । ध्रुवं द्वारदेशे महामुनिर्नारदः समागतोस्तीति प्रतिभाति । तद्गत्वा संपूज्य चैनमत्रानय ।

कीर्तिसेनः– यथाज्ञा देवस्य । (इत्युक्त्वा पुनः प्रविश्य ।) महाराज ! एष भगवान्नारदः ।

अश्वपतिः– (ससंभ्रमं प्रणम्योत्थाय चासनमर्पयित्वा बद्धांजलिर्विज्ञापयति ।)

धन्य एष दिवसो भगवन्मे
यत्र वो जनि समागमलाभः ।
नापरं दिनममुष्यदिनस्या-
रोढुमस्ति तुलनामिह योग्यम् ॥ ११ ॥ अन्यच्च ।
अयि मुनिवरमौले धन्यमद्यैव युष्म-
च्चरणकमलसेवालाभतो जीवितं मे ।
इदमपि च सुराज्यं जन्मतो यच्च किंचि-
त्कृतमिह सुकृतं तच्चापि जातं फलाढ्यम् ॥ १२ ॥

नारदः– वत्स अश्वपते ! त्वं त्वदीयेन प्रजापालनरूपेण धर्मेणैव कृतार्थो धन्यतानिधानं चासि । तथापि यदेवं ब्रूषे विनयाचचवैव भूपणतामधिगच्छति । परमिदानीं वयं परस्परश्लाघायामेव क्षीयमाणं कालं कर्तव्ये कर्मण्येव योक्तुं दत्ताव-

धाना भवाम चेत्साधु स्यात् ।

अश्वपति– एवमेव महानुभावैवमेव । ( इत्युक्त्वांतः किमपि स्मरति । )

नारदः– ( स्वगतं । ) भूपतेर्मनसि किमप्यौदास्यमस्तीति तन्मुखमुद्रैव निवेदयति । अस्तु प्रश्नेनैवावगमिष्यामि । (प्रकाशं ।) वत्स अश्वपते ! कतमा चिंता शारदेंदुसुंदरं ते वदनमंडलं विधुंतुदच्छायेव म्लानतामुपनयति ।

अश्वपतिः– ( अनाकर्णितकेन विचारमग्न एव तिष्ठति । )

नारदः– ( स्वगतं । ) विशुद्धश्रद्धापूर्वकमनेकपुरश्चरणाचरणसाक्षात्कृतसावित्रीचरणदर्शनसुखस्याप्यस्यौदास्यवश्यतेयमाश्चर्यमुत्पादयति मनसि मे । भवतु पुनः पृच्छामि ।

वत्स ! वामा धर्मार्थकामास्ते वा मा वा मानदानद ।
सावित्रीदर्शनानंदोऽमंदो नाद्यानुभूयते ॥ १२ ॥

अश्वपतिः–भगवन् ! अवितथो भगवतस्तर्को वत्सायाः सावित्र्या मुखदर्शनसुखविरहेणैव व्यग्रं मे मानसं ।

नारदः– ( सस्मितं स्वगतं । ) प्रायः सर्वस्य हृद्गत एव स्फुरत्यर्थः प्रथमं । यतो मया देव्याः सावित्र्या दर्शनविषये विहितस्तर्को नरपालहृदये सावित्रीसंज्ञकस्वकीयपुत्रीदर्शनरूपेण फलितः । भवतु तथैव निर्वाहयिष्यामि । ( प्रकाशं । ) वत्स ! किमिदानीं वत्सा सावित्री नालंकरोति नगरीं ते ।

अश्व०–( बद्धांजलिर्भूत्वा । ) भगवन् ! ज्ञानमयेन चक्षुषा निखिलमपि पश्यतां न किंचिदप्यविदितं भवतां । तथापि युष्मदा-

ज्ञया विज्ञाप्यते। सा तु पवित्रचरित्रा पुत्री सावित्री स र्वैरपि गुणैरात्मनोनुरूपं वरमन्वेष्टुं मदाज्ञयैव करोति देशाटनं। देशाद्देशं नगरान्नगरं ग्रामाद्ग्रामं भ्रमंत्याश्च तस्या व्यतीत एवैको वत्सरः। आलोकिताश्च पूर्वदक्षिणपश्चिमदिक्स्था अशेषपुरपुरुहूतकुमाराः परं न तेषु कश्चित्सावित्रीमनोमरालविश्रामारामतामनुबभूव। ततः सा उत्तरस्यामुत्तीर्णास्तीति मासादर्वाक् समागतादार्यशत्रुशल्यपत्रादवगता मत्प्रवृत्तिः। परमिदानीं नास्ति काचित्प्रवृत्तिः। तद्विषये च कुलीनकीर्तिसेनेन सह मत्तचे प्रसंगे यावत्स्मरणमभूद्भवतां तावदेव भवंतोपि भूषयामासुर्भूमिमिमां। तत्कदा सा समागमिष्यति का चास्ति तस्याप्यवस्था किंकश्चिन्नरपालकुमारस्तस्या मनोमरालालानतामनुबभूव नवेति सर्वं भवद्भ्य एवावगंतुमिच्छामि॥

नारदः–( नेत्रे निमील्य ध्यानं नाटयति। नेत्रे समुन्मील्य।) राजन्! नास्ति किंचिच्चिंताप्रयोजनं। महरादनंतरं पवित्रचरित्रायाः पुत्र्याः सावित्र्या मुखदर्शनसुखमनुभविष्यसि।

अश्वपतिः–( साश्चर्यानंदं स्वगतं ) अहो किं महरोत्तरमेव प्राणनिर्विशेषा मे पुत्री पुरमिदमलंकरिष्यति। ( प्रकाशं। ) भगवन्! महान् अनुग्रहो मयि विहितः। किंच।

यावन्मुनिप्रवर सा तनया नयार्द्रा
संभूषयिष्यति पदैर्नगरीं मदीयाम्।
तावद्दयामृतमयाशय तावकीनो

दासोयमिच्छति भवंतमिहस्थमेव ॥ १४ ॥
यतः समागतायां तस्यां तदंगीकृतराजकुमारगुणदोषयोर्भवद्भ्य एवाभिज्ञा भविष्यामः ।

नारदः–( सस्मितं । ) यथा रोचते महाराजाय । अयं जनस्तु त्वदीयप्रणयपरवानेवास्ति ।

अश्वपतिः–महानयमनुग्रहः । ( इत्युक्त्वा क्षणं विचार्य प्रकाशं । ) मुनिराज !

सावित्रीविरहे याता समैकापि ममाखिला ।
अष्टौ न घटिका एता यांति श्रुत्वा भवद्वचः ॥ १५ ॥

नारदः– वत्स अश्वपते ! युक्तं खलु भवदुक्तं ।

कथमपि विदितो भवेत्कदाचि–
द्यदि हृदये प्रियसंगमस्य कालः ।
स भवति कतिचित्क्षणांतरायो–
प्यवनिपरोत्कतया दृढं दवीयान् ॥ १६ ॥

तद्यदि रोचते भगवते केनचित्क्रीडाविनोदेन तं कालमतिवाहयामः ।

अश्व०–साधु भगवन्! साधु। कतमं क्रीडाविनोदं करिष्यामः।

नारदः– यदि रोचते वत्साय तर्हि बुद्धिबलक्रीडामेव कुर्मः ।

अश्वपतिः– प्रियं मे प्रियं मे । भवदाज्ञया क्रीडातीव रोचते मे । ( इत्युक्त्वा ।) अरे कोस्त्यत्र । ( इति समाव्हयति । )

द्वारपालः–( प्रविश्य । ) महाराज ! सर्वेपि सेवकास्त्विह्त्येवाज्ञाप्रतिपालकाः । को नियोगो देवस्य ।

अश्वपतिः—द्वारपाल ! गच्छ समाहय बुद्धिवलकेलिकुशला-
वस्मदीयौ किंकरौ ।
द्वारपालः— यथाज्ञा महाराजस्य । ( इत्युक्त्वा निष्क्रामति । )
नारदः— अहं तु अत्र मध्यस्थ एव भविष्यामि ।
अश्वपतिः—(सस्मितं) स्वभाव एवायं श्रीमतां यत्प्रथमं युद्धा-
रंभं कारयित्वानंतरं मध्यस्थतानुकरणं ।
द्वारपालः— प्रविश्य देव ! एतौ बुद्धिवलकेलिकुशलौ किं-
करौ द्वारि तिष्ठतस्ततो देवः प्रमाणं ।
अश्वपतिः— समागच्छतां ।
द्वारपालः— यथाज्ञा देवस्य । ( इत्युक्त्वा निष्क्रम्य चतुरंगके-
लिकुशलाभ्यां किंकराभ्यां सह प्रविशति । )
प्रथमः— (प्रविश्य च सर्वतोवलोक्य ।)अहो रूपातिशयो महा-
राजस्य । तथाहि—
अयं सद्गुणाभूषणैः शोभमानः
परं भूषणं दूषणं मन्यमानः ।
विनाभूषणं भूषणं भूतलस्य
प्रभाति प्रभावान् महाराजराजः ॥ १७ ॥
द्वितीयः— (नारदं विलोक्य । )
भस्मत्रिपुंड्रललितामलभालभागो
रुद्राक्षभूषणविभूषितसर्वगात्रः ।
श्रीमान् महामुनिरयं किल नारदोपि
श्रेयस्करो लसति चात्र नृपालमार्ग्यः ॥ १८ ॥

उभौ– ( प्रकाशं । ) जयतु जयतु महाराजः ।
अश्वपतिः–अद्य भवंतौ बुद्धिबलक्रीडायां बुद्धिबलं स्वकीयं संप्रकाश्य भगवतोमुष्य महामुनेः स्वांतं प्रीणयतं ।
उभौ– यथाज्ञा देवस्य । ( इत्युक्त्वा सन्मुखमुपविशतः । )
प्रथमः– सखे कपिंजल ! इंद्रनीलमयी रोचते ते सेना पद्मरागमयी वा ।
द्वितीयः– सखे नूपुरक ! पद्मरागमय्येव रोचते मे सेना ।
प्रथमः– सखे ! प्रतिदिनप्राप्तपराजयरोषावेशारुणवर्णामिव स्थितां तां त्वमेव गृहाण । अहं तु निजभुजबलसमासादिताक्लिष्टजयलक्ष्मीसंक्रांतप्रतिबिंबतयेवातिनीलामेतामेव स्वीकरोमि ।
द्वितीयः–अलं कपोलकल्पनया । का जयवती । का च पराजयवतीति सर्वं क्रीडैवेयं विशदयिष्यति । ( इत्युक्त्वा व्यूहं रचयति । )
नारदः–(विलोक्य ।) राजन् ! अनेन कपिंजलेन राजाग्रयायी पत्तिः प्रधानपुरःस्थश्च पत्तिराजिमुखे प्रेषितौ । अनंतरं चाश्वारोहावपि तत्पार्श्वे स्थापितौ याभ्यां बलवत्तरौ संपन्नौ तौ पत्ती ।
अश्वपतिः– ( विलोक्य । ) मन्ये करभावपि तत्र संस्थाप्य विधास्यति दुष्प्रवेशं दुर्गं ।
नारदः– वत्स अश्वपते ! दीयतामितोपि दृष्टिः । अनेन तु प्रधान एव करभद्वयानुगतः प्रेषितः परबलपरित्रासाय ।

यौंतरायीभूतोस्य दुर्गरचनायां ।

अश्वपतिः– एवं भगवन्नेवं । अयमेकः कार्णाटोयमपरः काश्मीरश्च उभावपि कुशलतरावस्यां क्रीडायां । नातिशेते कोपि कमपि विनाऽकस्मिकमनोविक्षेपं ।

नारदः– एवं खलु । निपुणतरत्वां निवेदयत्येवानयोर्व्यूहरचनापरिपाटीयं । पश्य पश्य चमत्कृतिं करोति चेतसो मे । (अंगुल्या दर्शयन् ।) यदयं–

गणयति न गजविनाशं न चाश्वनाशं प्रधाननाशं वा ।
परिपाति पत्तिमेकं परिणति विजयैकमूलं तम् ॥ १९ ॥

अयमपि–

निर्बलमपि च न हंति प्रधानममुमश्वमपि नेभम् ॥
रचयति रत्नसमूहं पत्तिममुं निर्बलं कर्तुम् ॥ २० ॥

अश्वपतिः– भगवन् ! अद्य खलु सफलमेतयोः क्रीडाकौशलं भगवन्मनःपरितोषेण ।

नारदः– वत्स अश्वपते ! व्यतीतानि किलागण्यगणनापात्राणि गणरात्राणि रणांगणगजेन्द्रीरवीरव्यूहरचनाविलोकनसुखानुभवलाभस्य मे । तेन क्रीडाव्यूहरचनापीयं प्रीणयतीवांतःकरणं । किं च विशदयति बुद्धिबलं बुद्धिबलकेलिर्मनुष्याणां । यतः–

क्रीडा हि व्रीडयंत्यन्याः क्रीडालुब्धहृदो नरान् ।
इयं बुद्धिबलक्रीडा भूपयत्येव सर्वदा ॥ २१ ॥

अश्वपतिः–भगवन्नेवमेव । तत्रापि राजभक्तिरीतिनैपुण्यम-

गण्यमस्यां स्फुरति। पश्य-

मृत्वा स्वयं भवति कोपि गुणाय भर्तु-
र्हत्वा परं भवति कोप्यपरो हिताय।
त्यक्त्वा स्वगेहमपि कोपि भवेद्धितैषी
रक्षाकरो भवति कोपि निपत्य मध्ये॥ २२॥

नारदः- (पुनश्च क्रीडाचतुरंगिणीं निपुणं निर्वर्ण्य साश्चर्यानंदं।) राजन्! पश्य पश्य।

दूरत्वं करिणां न तत्तु गणितं का पत्तिवार्ताप्यहो
लीलालोलतमापि यत्र गणिता मंदा गतिर्वाजिनाम्।
औष्ट्रं सत्वरगत्वरं युगमिदं सार्धं गृहीत्वाधुना
प्राप्तौ मंत्रिवराविमौ प्रतिनृपं मन्येस्ति कार्यं महत्॥२३॥

नेपथ्ये- भूतार्थमाह भगवान् महानुभावस्तपोनिधिः। सत्यं भगवन्! सत्यं। महाराजस्य दासानुदासावावां हरिकरिपदातिप्रमुखं निखिलमपि बलं दूरे निधाय पवित्रचरित्रया पुत्र्या सावित्र्या सहातिगत्वरतरकरभयुगलमात्रसहायौ नरेंद्रमद्य किमपि मद्गुमुपागतौ स्वः।

अश्वप०- (साश्चर्यानंदं।) अहो किं मंत्रिप्रवरौ मे शत्रुशल्यवीरमित्रौ समागतौ समं पुत्र्या सावित्र्या। अहो रमणीयता वासरस्यास्य। (इति परितो विलोकयति।)

नारदः- (सस्मितं स्वगतं।) बुद्धिवलक्रीडाविषयकमपि मे भाषणं घुणाक्षरन्यायेन प्रकृते फलितं। ~~~

अश्वपतिः-अयि चतुरंगकेलिकोविदौ किंकरौ मे! सांप्र-

तं तु क्रीडेयं विरमतु । पुनः कदाचित्सत्यां निवृत्तौ द्र-
क्ष्यामः कौशलं युवयोः ।

किंकरौ– यथाज्ञापयति देवः । ( इत्युक्त्वा निष्क्रांतौ । )

( ततः प्रविश्य प्रधानौ । )

प्रधानौ– जयतु जयतु महाराजः । ( इति वदंतौ राजानं
प्रणमतः । )

अश्वपतिः– परमेश्वरः करोतु कल्याणं वः ।

प्रधानौ–( नारदं विलोक्य । ) अहो सकलसुरासुरवृंदवंदनी-
यपादारविंदो भगवान् देवर्षिरप्येनां सभां भूषयति ।
महद्भाग्यमेतन्नः । ( इति वदंतौ नारदं प्रणमतः । )

नारदः– वत्सौ ! कुशलिनौ भूयास्तं ।

अश्वपतिः–आर्य शत्रुशल्य ! मित्र विरमित्र ! अस्मिन्नति
दीर्घे देशाटने आरोग्यं किमविघ्नमनुभूतं युवाभ्यां ।

प्रधानौ–( सगद्गदकंठं । ) महाराजप्रसादात्सर्वेपि सुखमया
एव व्यतीता वासरा अद्यावधि । परं त्वौदास्यमियदेवाभूत्
यत्कोपि राजकुमारो न पवित्रसावित्रीमनोमातंगालान-
स्तंभतामनुबभूव ।

अश्वपतिः– ततः किं वृत्तं ।

शत्रुशल्यः– पूर्वदक्षिणपश्चिमदिक्स्थराजकुमारसंबंधि वृ
निवेदितप्रायं युष्मच्चरणेभ्योस्माभिः संदेशद्वारा ।

अश्वपतिः–एवं खलु । मासादर्वाक् समभून्मे युवयोः स पत्र-
दूतो नयनातिथिः । तदनंतरमुत्तरदिगुतीर्णानां वृत्तांतो

युष्मन्मुखाच्छ्रोतव्यः सांप्रतं ।

प्रधानौ– ( सांजलिपुटं । ) देव एतच्चित्रपटमेव निवेदयिष्यति तत्रत्यं वृत्तांतं ।

अश्वपतिः– भवत्वेवं समाहितोस्मि ।

प्रधानौ– चित्रपटं दर्शयतः ।

अश्वपतिः– ( सादरं निर्वर्ण्य । ) आः ज्ञातं ।

अयमतिगहनैर्वनैर्मनोज्ञो
झरदतुलामलनिर्झरो गिरींद्रः ।
विलसति विविधाश्रमाभिरामो
मुनिसहवाससुशांतसर्वसत्वः ॥ २४ ॥

सोयं शैलः कनककदलीसद्दलैरिंद्रनील-
च्छायैश्छन्नी नवतरझरन्निर्झरैर्हारहारी ।
राजेवासौ चमरकगणोत्पुच्छगुच्छोल्लसच्छ्रीः
स्वांते शांतिं वितरतितरां दर्शनादेव सद्यः ॥ २५ ॥

नारदः– ( सहर्षं निर्वर्ण्य । ) वत्स अश्वपते ! काप्यपूर्वैव रमणीयता पर्वतकुलकौस्तुभस्यास्य । तथाहि—

अनुवनमनुपर्णशालमेते
शमदमसंयमशालिनो मुनींद्राः ।
परशिवपदपद्मलीनचित्ता
वनतरुसाम्यमिवाश्रयंति सर्वे ॥ २६ ॥

अश्व०– भगवन् ! एवमेव इतोपि दीयतां दृष्टिः । अविरलसरलशालरसालतालतमालमालाशालिन्यस्मिन्नाश्रमे स्वयं-

शीर्णजीर्णैः पर्णैः परितः पिहितायां तपस्विजनहितायां विशालायां पर्णशालायां वानप्रस्थावस्थामनुभवन्नयं कश्चिद्वृद्धतरो राजर्षिः सप्तजिह्वं जुहोति । अहो कदाहमेतादृशसुखानुभवभाजनं भविष्यामि । यतः—

केऽपि मुक्तविषया अतिधन्या
वल्गुवल्कलविभूतिविभूषाः ।
पुत्रदत्तवसुधावसुधेशाः
संश्रयंति गिरिशं गिरिकुंजे ॥ २६ ॥

(इति वदन् गद्गदगलः पुलकितगात्रो नयनाभ्यामश्रूणि मुंचति।)

वीरमित्रः— महाराज! बहुद्रष्टव्यमस्ति तद्विषयांतरे न प्रवेश उचितः सांप्रतं ।

अश्वपतिः— (सलज्जमश्रूणि नयनाभ्यां परिमृज्य निपुणं निर्वर्ण्य।) प्रियमित्रे मे। एतौ दंपती प्रनष्टनेत्रौ किम्।

प्रधानौ— अथ किम् ।

अश्वपतिः— (सुचिरं स्मृतिमभिनीय।) अहो अयं शाल्वानामधिपतिर्द्युमत्सेनः ।

वीरमित्रः— किं दृष्टपूर्वोऽयं श्रीमद्भिः । कथमभिज्ञातः।

अश्वपतिः— एवं।पूर्वमेकस्मिन् राजसूये दर्शनसुखमनुभूतं मयैतेषां । तस्मिन् समये च ते पूर्णयौवनसमारंभा आसन् तथापि तेषामाचरणानि महात्मनामपि श्लाघ्यान्यासन् । मयि च तैस्तदा पूर्णा प्रीतिर्विदितासीत् (इत्युक्त्वा चित्रं

प्रति।) अयि प्रियमित्रचिंतामणे ! (इत्यर्द्धोक्ते।) धिक् प्रमादः । अयि आर्यराजर्षे! व्यतीतेषु बहुषु गणरात्रेषु पुण्यैरुपलब्धं युष्मच्चरणदर्शनसुखममुना जनेन । यतः-

किं पीयूषमयूखमूर्तिनिकरैरेवायमुत्पादितः
किंवा नंदननंदिचंदनरसैः संनिर्मितः शीतलैः ।
इत्थं मित्रमणे जनस्य जनयेच्चकांतिवर्योपि यः
सोयं किं प्रियसंगमो भुवि भवेत्पुण्यैरगण्यैर्विना॥२७॥

प्रधानौ-(स्वगतं।) विस्मृतचित्रदर्शनप्रसंगो देव इति प्रतिभाति ।

नारदः- (स्वगतं।) शोभते तादृशं प्रेमपवित्रतरचरित्राणां सन्मित्राणां।

शत्रुशल्यः- देव! चित्रदर्शनमेतत्। दलदरविंददलदर्पमोचने लोचने प्रसारयान्यतोपि ।

अश्वपतिः-(स्वगतं।) अहो प्रेमपरतंत्रतया विस्मृतचित्रदर्शनप्रसंगेन मया किमेतदुक्तं। भवतु। क्षमापयामि नारदं। (नारदं प्रति प्रकाशं।) सन्निहितेष्वपि भगवत्सु निःसीमप्रेमपीयूषरसपूरदूराकृष्टस्वांततया ग्रहगृहीतेनेव मदिरामत्तेनेवोन्मत्तेनेव च मया यत्किंचिदुक्तं प्रसंगपथातीतं तत्क्षंतव्यं महाशयशिरोमणिभिर्भवद्भिः ।

नारदः- वत्स! नैवदूषणं प्रत्युत भूषणं भवादृशां निष्प्रतिमप्रेमरसपारावारपारदृश्वनां । यतः-

मित्राणि संतु शतशोथ सहस्रशो वा
स्वार्थैकबद्धहृदयानि नमोस्तु तेभ्यः ।
ये मित्रसात्कृतमनोवचनक्रियार्था-
स्ते त्वादृशाः कति नु धन्यतरा धरायाम् ॥ २८ ॥

अश्वपतिः—एषा स्वभावसिद्धा श्रीमतां परदूषणभूषणकरिष्णुता कापि जागर्ति । (इत्युक्त्वा पुनः स्थलांतरे सत्यवच्चित्रं विलोक्य।) इदमेव महाराजस्यास्य युवावस्थाचित्रं । असंशयं तदेवैतचदेवैतत् । तदेव तस्यैतल्ललितं ललाटं । तदेवैतत्तस्य दीर्घं भुजद्वयं । सैवेयं तस्य शुकचंचूमतिस्पर्द्धिनी नासा । सैवेयं तस्य विशाला वक्षःस्थली । त एवैते तस्य कमलदलगर्वमोचने लोचने । अशंकं स एवायं ॥

नारदः— वत्स! युवावस्थोचितान्याभरणानि न संतीति शंकास्थानं ।

अश्वपतिः— अहमपि तदेव विमृशामि ।

नारदः— किमन्यस्य तु न भविष्यति चित्रं ।

अश्वपतिः—(अधिकं विलोक्य।) अवश्यं चित्रं तु तस्यैव महाराजस्य युवावस्थावस्थायिनोस्ति । (किंचित् स्मृतिमभिनीय निपुणं निर्वर्ण्य।) अहो स्मृतिरागताद्य मे । निपुणः शिल्पी नैतादृशं प्रमादं कुर्यात् ।

नारदः— वत्स! चित्रं त्वेतन्निर्दोपलेशं मे प्रतिभाति । वत्सस्य पुनः केन हेतुना शिल्पप्रमादकल्पनां करोति चेतः॥

अश्वपतिः– भगवन् ! अनेन दयालुना महाराजेन स्वल्पेपि परिचये मां स्वकीयमाभ्यंतरमित्रं गणयता क्वचिन्महाहवे महासिप्रहारसमुत्पन्नमहाक्षतावलीद्विगुणतरगांभीर्या विजयलक्ष्मीविलासवापिकेव स्वीया वक्षःस्थली प्रदर्शितासीन्मह्यं ।

नारदः– अधुना अवगतं मया । तदेतद्वृद्धावस्थाचित्रे प्रदर्शितं स्फुटं शिल्पिना। नात्र युवावस्थाचित्रे। यद्येवं भवेच्चेन्महान् प्रमादश्चित्रकारस्येति निर्विवादं । परमसंभवस्तादृशचित्रकारस्यैतादृशप्रमादप्राप्तेस्ततो मन्ये तदीयकुमारस्यैव चित्रमेतद्भविष्यतीति ।

अश्वपतिः–ममाप्येष एव स्फुरति तर्कः । परं यद्येवं चेत् अवस्थाविरुद्धवस्त्राभरणधारणे किं निदानं ।

नारदः– सांप्रतमेतद्विषये प्रधानयाचैव निःसंशयौ भवावः ।

अश्वपतिः– निपुण शत्रुशल्य ! कस्येयं चित्रप्रतिमा ।

शत्रुशल्यः– देव ! एषा तु चित्रप्रतिमा अमुष्यार्यराजर्षेः पुत्रस्यैवास्ति ।

अश्वपतिः– तर्हि स स्वीयं भाज्यं राज्यं परित्यज्य किमर्थं सदैव तपोवनमागतोस्ति ।

वीरमित्रः– देव ! तस्य पितृपादैरपि न परित्यक्तं राज्यं ।

अश्वपतिः– किं तर्हि केनापि परित्याजितं ।

धीरमित्रः– किमन्यत् ।

अश्वपतिः– केन ।

**वीरमित्रः**– तस्य सपत्नसमूहेन।
**अश्वपतिः**–( सखेदं। )

> हाहा धिग्धिङ्नयनरहितौ दंपती निष्कलंकौ
> राज्यभ्रष्टावहह विहितौ निर्दयैर्दुःसपत्नैः।
> धिङ्मे राज्यं धिगपि च बलं धिग्धनं धिक् च कोशान्
> सेनामेनामपि च धिगयं यस्य दुःखी सुहृन्मे ॥ २९॥

अरे रे दुष्टाः! किमवनावश्वपतिर्नास्तीति मन्यध्वे। सांप्रतं सन्निहितः प्रलयो वः। अयि महाराज राजर्षे! आशायामपीदृश्यामवस्थायां युष्मद्गुणविक्रीतस्वांतसर्वस्वोयं जनो न स्मृतिपथमारूढो वः। अहो प्रधानाभ्यामप्याभ्यां चित्रदर्शनाडंबरेण महान् विलंबः कृतः। स्वल्पैरेवाक्षरैर्यदिदानीमुक्तं तत्पूर्वमवदिष्यतां चेत्साध्वभविष्यत्। परं यज्जातं तज्जातं। सांप्रतं संपूर्णं चित्रदर्शनकुतूहलं। (इत्युक्त्वा चित्रपटमधः क्षिप्य नारदं प्रति।) भगवन्नात्रैव कलहप्रियो भगवान्। अतः सहैवागत्य तेषां दुष्टानां स्वल्पैरेवाहोभिः कीदृशीं करोमि दशामिति विलोकनीयं भगवता।

**नारदः**– यथा रोचते वत्साय।
**अश्वपतिः**–(अन्यतो विलोक्य) अरे द्वारपाल! गच्छ मद्वचसाभिधेहि सेनापतिं यदेकयामाभ्यंतर एव सर्वां सेनां सज्जां विधेहीति। तावदहमपि पुत्रीं सावित्रीं बहुदिवसलब्ध-

दर्शनां संभाव्य द्रुतमागच्छामि। (इत्युक्त्वोत्थातुमिच्छति।)

प्रधानौ– (बद्धांजली भूत्वा।) देव! यद्द्रष्टव्यमस्ति तद्विहाय विषयांतरे कथमुच्चार्यते। चित्रं तु पूर्णं विलोक्यतां।

अश्वपतिः– अतः परं किं द्रष्टव्यमस्ति शेषं। केवलं तत्सपत्नान् समुन्मूल्य अयमेव युवराजस्तत्पदेभिषेच्य इत्येतावन्मात्रमवशिष्टं द्रष्टव्यमस्ति नान्यत्।

शत्रुशल्यः– तथाप्यस्मिन् माधवीमंडपचित्रे दीयतां दृष्टिः। (इत्युक्त्वा चित्रपटं दर्शयति।)

अश्वपतिः–(अस्थिरचित्त एव चित्रं विलोक्य।) आः शत्रुशल्यवीरमित्रयोरप्यत्र चित्रमालिखितं। (पुनर्विलोक्य।) अरे किं तिरस्कारिणीं तिरस्कृत्य पवित्रचरित्रा पुत्री सावित्री करकमलयुगलगृहीतहारिहीरकहारा नरनौकार्ते उत्तीर्णैवात्र चित्रपटे दृश्यते। (अधिकं विलोक्य।) अवश्यमस्मिन् राजकुमारेऽस्या निमग्ना दृष्टिः। मन्ये ततस्तस्मै स्वयंवरमालामर्पयितुं गच्छति। एतौ च प्रधानौ तां निवारयंताविवांतरापततः। कथं मुने! एवमेव न वा।

नारदः– वत्स! एवमेतत् खलु। परंत्वेतावता वत्सायाः सावित्र्याः प्रधानयोश्च विचारवैरुध्यं स्फुटं प्रतिभाति।

अश्वपतिः– प्रधानौ! भवतोरत्र कीदृशी संमतिः।

प्रधानौ– पदभ्रष्टेनामुना राजकुमारेण सह वत्सायाः सावित्र्याः स्वयंवरः किमुचितः। किं न संत्यन्येष्वपिलेष्वव-

निवलये राजकुमाराः ।

अश्वपतिः-प्रियप्रधानौ ये ! पदभ्रष्ट इति न चिंता विधेया। गुणा दोषाश्च तस्य विलोकनीयाः । अतोमुष्मा द्भगवतो म- हामुनेर्नारदात्सर्वमवगंतव्यमिदानीम् ।

नेपथ्ये- मा मौदास्वं चक्रवाकि व्रज त्वं

भूयो भावी भास्वतोत्र प्रकाशः ।
धार्यं धार्यं धैर्यमापत्सु सर्वै-
रित्थं शास्त्रेपूक्तमस्ति प्रवीणः ॥ २० ॥

नारदः-अहो किं सायंसमयः संवृत्तः। (परितो विलोक्य। ) एवमेव ।

कुजनमतिरिवेयं भूस्तमोरुद्धरूपा
सुजनमन इवेदं व्योम च व्याप्तरागम् ।
गुणिन इव गुणज्ञान् पत्रिणोमी श्रयंते
वरफलभरनम्रान् शाखिनश्चातिकम्रान् ॥ २१ ॥

तदहं शिवार्चनाय गच्छामि । ( इत्युक्त्वोत्तिष्ठति । )

अश्वपतिः-भगवन् दयानिधे! समुपासितसायंसमयसंध्येन विरचितपरमशिवसमर्चनेन प्रजप्तजप्यमंत्रनिकरेण च पवित्रतरचरणकमलमालया भगवता सत्वरतरं भूरिर भूषणीया ।

नारदः- वत्स अश्वपते !, कतिपयकालकलातिवाहनानंत

समागतमेव मामवेहि ।

अश्वपतिः— महदनुग्रहचिन्हमेतत् । ( इत्युक्त्वा प्रणमति ।)

नारदः— ( गगनमार्गेण गच्छति । )

अश्वपतिः— अयि प्रधानौ ।

प्रधानौ— आज्ञापयतु देवः ।

अश्वपतिः—अहमपि शिवार्चनं विधाय देव्या मालव्या पुत्र्या सावित्र्या च सह विचारभवनं गमिष्यामि । युवाभ्यामपि तत्र त्वरितमागंतव्यं ।

प्रधानौ—यथाज्ञा देवस्य । ( इत्युक्त्वा प्रणम्य निष्क्रांतौ ।

अश्वपतिः— अये द्वारपाल ! ।

द्वारपालः— आज्ञापयतु देवः ।

अश्वपतिः— अहं शिवार्चनं विधातुमंतःपुरे गंतुमिच्छामि · तदंतःपुरपथं दर्शय ।

द्वारपालः— देव! इत इतः (इति द्वारपालेनोपदिश्यमानमार्गोश्वपतिर्निष्क्रांतः । )

॥ इतिप्रथमोंकः ॥

---

श्रीविठ्ठलात्मजजुषोर्द्धशशांकमौले-
र्दासस्य वर्यगुरुकेशवधर्मसूनोः ।
एषा कृतिर्मम तु शंकरलालवंधो-
र्गौरीगिरीशपदयोः कुसुमांजलिः स्यात् ॥ १ ॥

## ॥ अथ द्वितीयोऽङ्कः ॥

( ततः प्रविशति पुष्पावचयव्यग्रहस्तः सोमशर्मा । )

सोमश०–( स्वगतं । ) महाविचारचारिचारुचेतोवधानाभ्यां प्रधानाभ्यामाज्ञप्तोस्मि त्वरितं शिवपूजनाय पुष्पाण्याहरेति। तदेतद्राजभवनोद्यानमागतोस्मि। (समंततो वरफलभारनम्रान् कम्रांस्तरुवरान् विलोक्य सहर्षं । )

धन्यतां तरुवरा भवतां को
वर्णयेन्न भुवि हंत कृतज्ञः ।
येऽनुभूय विपदो बहुरूपाः
स्वाश्रितान् कुरुथ सौख्यनिमग्नान् ॥ १ ॥

( इति पुष्पाण्यवचिन्वन् परिक्रामितकेन पुनर्वदति । )

सत्फलानि कुसुमानि दलानि त्वक्चमूलमपि सर्वजनेभ्यः।
अर्प्यतेंगमपि भस्म विधातुं यैर्भवद्भिरनिशं फलनम्रैः॥२॥
दातृतास्त्वनुपमा भवदीया सर्वभूतहितकारिचरित्रा ।
भूपतिर्नहि वदान्यवरिष्ठोप्येति हंत तुलनां क्वचिदस्याः॥३॥

नेपथ्ये– आः कोयमविचारचार्वी वाचमुच्चारयत्यस्मिन् राजभवनोपवने ।

सोमशर्मा–( स्वगतं । ) अहो कश्चिद्राजसेवकः श्रुत्वैतदस्मद्भाषितं प्रकुपित इव प्रतिभाति । भवतु । न सत्यवादिनां भयं । ( तरुवरान्प्रति पुनः प्रकाशं । )

ताडयंति बत ये लिह युष्मान्
यच्छथातुलफलान्यपि तेभ्यः ।
तत्कदाचिदपि कोपि नृपालो
नैव कर्तुमलमस्त्वचलायाम् ॥ ४ ॥

देवशर्मा– (प्रवृद्धकोपाटोपात्सहसा बहिर्निष्क्रम्य।) अरेरे! कः कोयं वारंवारं मदीयहृदयशिरःश्रवणोद्वेगकरीं वाचं उद्गिरति।

सोमशर्मा–(निपुणं निर्वर्ण्य।) अहो किं बालमित्रं मे देवशर्मा। स्वागतं ते।

देवशर्मा– अथ किं। स एवाहमस्मि खलु। परं भवद्दत्तं विशेषणं नेदानीं भवत उपादातुमीहे।

सोमशर्मा–तादृशः कोस्ति मे बलवानपराधो येन बालमित्रमपि भूत्वेदानीमेकपद एवेमां पवित्रां मैत्रीं सत्कुमुत्कंठितोसि।

देवशर्मा– मैत्रीत्यागे त्वेतदेव महन्निदानं जागर्ति।

सोमशर्मा– किं तत्।

देवशर्मा– यदिदानीमेव भवता मनसा वचसा चाचरितं। न प्रायो मनोविचारव्यभिचारिण्यो वाण्यो भवंति भवादृशां भव्यानां।

सोमशर्मा– स्फुटं कथय। न मयावगम्यते कश्चिदेभिर्वचोभिर्भवदाशयः।

देवशर्मा–शृणु तर्हि स्फुटमुच्यते । यदहं भूपालं भूतलपरमेश्वरं गणयामि । त्वं च तं जडेभ्यो गुरुहेभ्योप्यधमं गणयसि । तत एव नावयोर्मैत्री स्थास्यति । मन्ये च सांप्रतं देशाटनादेवाधिगताभिनवविद्योसीति । यतो देशाटनात्पूर्वं नेदृशं दाक्षिण्यं त्वयि कदाचिदपि दृष्टमस्माभिः । ( इति-वदन् रोषारुणाक्षस्तूष्णीं तिष्ठति । )

सोमशर्मा– सखे ! मया तु केवलं तरुवरस्तुतिरेव कथितया गीता । नरपालनिंदानिदाना मदुक्तिर्नासीत् । परं भवता मृषा कलहारंभेण स्मारितमिदानीमेतत् । सत्यं देशाटनादेवाधिगतोस्म्येनां विद्यां । मित्रमीतिं मे परिपालय मूलतः समुन्मूलय वा । परं मया तु सत्यमसंभाव्य स्थातुमशक्यं । उक्तं च मयैकस्मिन्नपि तथ्ये वचसि त्वं रोषावेशविवशो भविष्यसि ।

देवशर्मा– उच्यतां यद्वक्तव्यं । सहिष्ये यदीमानं यथाकथंचिद्भवद्वचःश्रवणदुःखं ।

सोमशर्मा–शृणु तर्हि वदामि । सख ! अहं तु राजसेवामन्यादृशीमेव मन्ये । मया यद्यो विवेकिनो विद्वांस आप्ताः पवित्राशयाश्च राजसेवाकारिणो दृष्टास्तेषां तत्राः फलं स्वकीये पवित्रत्वेप्यपवित्रत्वारोपरूपं विद्वत्वेप्यविद्वत्त्वारोपरूपं विवेकित्वेप्यविवेकितारोपरूपं आप्तत्वेप्यनाप्तत्वारोपरूपं पवित्राशयत्वेप्यपवित्राशयत्वारोपरूपं चोपलब्धं । तथापि ते तु स्वमुखश्रेयोभ्युदयैकबद्धबुद्धयस्माद

शापवादान् परशतानपि न प्रगणय्य स्वभर्तृसेवामेवाचरंति। परं त्वया नरलोकपरमेश्वरत्वेन मानिता भूपतयस्तु तानपि स्वकीयशत्रुनिर्विशेषान् गणयंतस्तिरस्कुर्वंति। नैतावदेव निरपराधलेशानां सप्रेर्ष्यांचिंतितात्मप्रभुदूषणानामविरतात्मप्रभुप्रियहितविचारनिमग्नचित्तानामपि तेषां प्राणानप्यपहर्तुं वांछंति। तदेदानीं पाषाणप्रहारपरिपीडिता अपि मधुरफलभारप्रार्पिणस्तरवः श्रेयांसः किमुतोपकारिभ्योप्यपकुर्वंतस्ते नरलोकपरमेश्वरास्ते नरेश्वराः श्रेष्ठाः।

देवशर्मा— काचित्कोयं प्रकारो न सार्वत्रिकः।

सोमशर्मा— इदानीं तवैव राज्ञश्चरितं वर्ण्यते श्रुत्वैवैतच्छांतो भविष्यसि।

देवशर्मा— अवहितोस्मि श्रोतुं।

सोमशर्मा— सखे! त्वमेव वद। प्रधानौ शत्रुशल्यवीरमित्रौ महाराजस्याश्वपतेर्हितैषिणावहितैषिणौ वा।

देवशर्मा— हितैषिणावेव। कोत्र शंकावकाशः।

सोमशर्मा— तर्हि तौ कुमार्याः सावित्र्याः कल्याणाकांक्षिणावकल्याणाकांक्षिणौ वा।

देवशर्मा— कल्याणाकांक्षिणावेव।

सोमशर्मा— स्मरसि सावित्र्या जन्मतः प्राक् अप्राप्तापत्यसुखदर्शनसुखयोर्देवीमहाराजयोः सत्संततिप्राप्तये कति कति सत्साधनानि विहितान्यासन् ताभ्यां प्रधानाभ्यां।

**देवशर्मा**–अथ किं। स्वल्पैरेवाक्षरैर्वदाम चेत् यावंति संततिप्रदानि सत्साधनानि संति लोके तेषां मध्ये नैकमपि तादृशं यन्न विहितं ताभ्यामित्यपि वक्तुं न किंचिच्छंकार्हं पश्यामि।

**सोमशर्मा**– नैतत्सर्वमविदितं प्रायो भवतो यत्कुमार्याः सावित्र्या जन्ममहोत्सवे कीदृशस्तयोरानंदः समभूद्–द्यापि च कीदृशी तयोर्भक्तिः सावित्र्यां जागर्ति कीदृशं वात्सल्यं वर्तते कीदृशश्च प्रेमपूरः प्रतिदिनं प्रवर्धत इति। मन्ये तयोर्वात्सल्यं यदस्ति कुमार्यां सावित्र्यां तत्सहस्रांशोपि स्वीयेष्वात्मजेष्वपि नभविष्यतीति निर्विवादं।

**देवशर्मा**–सखे ! सर्वमेतत्संपूर्णतया विदितपूर्वं मे। परं वक्तव्यं वद।

**सोमशर्मा**– शृणु तर्हि स्वल्पैरेवाक्षरैर्वदामि। सैव सावित्री आर्यौ वीरमित्रशत्रुशल्यौ स्वीयौ शत्रू इति गणयति।

**देवशर्मा**– ( साश्चर्यं। ) किं किं किं कुमारी निःसीमसारल्यसौशील्यशालिन्यार्ये शत्रुशल्ये पवित्रचरित्रे वीरमित्रे च शत्रुबुद्धिं बध्नाति। न कदाप्येवं संभावयामि।

**सोमशर्मा**– न कदाप्येवं संभावयामीति मन्यसे चेत्स्मरिष्यसि मद्वचः कालेन।

**देवशर्मा**– तर्हि महता कारणेन भाव्यं। पवित्रचरित्रा पुत्री

सावित्री न तादृश्यज्ञाकृतज्ञा च ।

**सोमशर्मा**– कारणमपि निवेदयामि धीरो भव । इदं नास्त्यविदितं प्रायः कस्यापि यन्महाराजस्याश्वपतेर्निदेशेनाद्य यावदेकं वत्सरं कुमारी सावित्री स्वानुरूपं वरमन्वेष्टुं देशाटनमकरोदिति ।

**देवशर्मा**– ततस्ततः ।

**सोमशर्मा**– तया सह गंतुं दयालुना महाराजेन अनंतनीतिशास्त्रावलोकनानुभवातिपक्वबुद्धी निसर्गशुद्धौ निर्व्यलीकराजभक्तिभरवरपाशनिबद्धौ वृद्धौ प्रधानौ शत्रुशल्यवीरमित्रावप्याज्ञप्तौ ।

**देवशर्मा**– तदपि ज्ञातपूर्वमेव । ततस्ततः ।

**सोमशर्मा**– प्रधानप्रसादपात्रतयाहमपि देशाटनसुखमन्वभूवं ।

**देवशर्मा**– युज्यत एतत् । ततस्ततः ।

**सोमशर्मा**– ततश्च तेषु तेषु देशेषु प्रचंडदोर्दंडमंडलबलखंडिताशेषप्रतिपक्षिक्षितिपालमंडला धीरा वीरा अतिगभीराशयाश्च पूर्वपश्चिमदक्षिणदिक्स्था अनेके राजानः स्वरूपसंपदुपहसितस्मरस्वरूपावलेपा निरवद्यविद्यातिहृद्याः प्रबलपराक्रमा असंख्या राजकुमाराश्च प्रेक्षिताः । परं न कोपि राजा राजपुत्रो वा सावित्रीमनोमरालमानसतामनुबभूव ।

**देवशर्मा**– ततस्ततः ।

सोमशर्मा– ततश्चैकस्मिन्पर्वतोपांताश्रमे तपस्यतः पदभ्रष्टस्य द्युमत्सेननाम्नः प्रणष्टलोचनस्यातिवृद्धस्य राज्ञः किशोरवयसं कुमारं विलोक्य चंद्रकांतशलाकेव चंद्रालोकं तस्याश्चेतोवृत्तिर्निःसीमप्रेमरससांद्रा समभूत्।

देवशर्मा– ततस्ततः।

सोमशर्मा– ततश्च।

> उत्तीर्य सद्यः शिबिकांतराला-
> न्नापेक्ष्य पित्रोरपि चाप्यनुज्ञाम्।
> प्रेम्णैव तस्मै वरणस्रजं स्वां
> संप्रस्थिता सार्पयितुं कुमारी ॥ ५ ॥

देवशर्मा– सखे! नायं सावित्र्या अपराधः। श्रुतं किल भूयोभूयस्त्वया मया च अलक्षितकारणविभागश्चक्षूराग इति। तत एव–

> इह कोपि च कस्यचित्सखे
> हृदयादप्यधिकः प्रियो भवेत्।
> न गुणा न वयो न संपदः
> परमप्रेमनिबंधकारणम् ॥ ६ ॥ ततस्ततः।

सोमशर्मा– ततश्च तदीयकार्श्योनिबद्धावधानाभ्यां प्रधानाभ्याम्–

> यत्नो वरोयमभिरूपतमस्तथापि
> नास्मै त्वया वरणमाल्यमिहार्पणीयम्।

सद्यः कृतान्यगुरुसंमतिमंति लोके
कार्याणि हा परिणतौ परितापयंति ॥ ७ ॥

इत्यादिभिर्बहुभिर्वचनैः सा निषिद्धा । इदमेव निदानं सावित्रीरोपपोषणस्य । विचारय किमस्त्यपराद्धं ताभ्यामिति ।

देवशर्मा– बालबुद्धिरेषा सावित्री यत्कुप्यति हितोपदेशेपि । महाराजः श्रुत्वैनं वृत्तांतं ध्रुवमुपालप्स्यते तां ।

सोमशर्मा– इदमेव श्रद्धाजाड्यं ते । शृण्विदानीं ते महाराजस्यापि विचारं । श्रुतैतद्वृत्तांतेन महाराजेनाप्युक्तमेतत् । प्रधानौ !

सत्यवान् स्वपदभ्रष्ट इति चिंता न मे हृदि ।
गुणा दोषाश्च तस्यान्ये श्राव्या अस्मान्महामुनेः ॥८॥

इति त्वामेवाधुना पृच्छामि यद्राज्ञां पदभ्रष्टतातुल्यः कोऽस्त्यपरो दोष इति । तादृशमपि दोषमनालोच्य महाराजस्ते सत्यवतोन्यान् दोषान् गुणांश्च श्रोतुमिच्छति । स कथमुपालप्स्यते सावित्रीम् । अत एव ब्रवीमि ।

सुखं जीवितुमिच्छद्भिः श्रेय इच्छद्भिरुत्तमम् ।
राजा च राजकार्याणि वंदनीयानि दूरतः ॥ ९ ॥

देवशर्मा– शनैर्वद शनैर्वद । श्रोष्यति चेत्कश्चिद्भवद्वचस्तर्हि महाननर्थो भविष्यत्यावयोः ।

सोमशर्मा– न मे भीतिः कस्यापि । सत्यवक्तुः कुतो भयं । परं त्वं किमर्थमत्रागतोसि तत्तु वद ।

देवशर्मा– सखे ! आज्ञप्तोहं महाराजेनाश्वपतिना यद्देवशर्मन् ! त्वरया पुष्पाण्याहर शिवपूजां विधाय विचारभवनं प्रति गंतुमिच्छाम्यहमिति । परमहं तु भवद्वचनश्रवणविस्मृतकर्तव्य इयंतं कालमत्रैव स्थितोस्मि। तदिदानीं गच्छामि स्वकार्यसिद्धये। ( इति निष्क्रांतः । )

सोमशर्मा– ( स्वगतं । ) अहमपि प्रधानाभ्यां त्वरितं पुष्पाण्यानयेत्युक्त्वा प्रेषितोस्मि । परमत्र तु विवादवशान्महान् विलंबोभूत् । भवतु । यज्जातं तज्जातमिदानीं त्वरिततरं गमिष्यामि । ( इति धावन् निष्क्रामति । )

इतिविष्कंभकः ।

( ततः प्रविशतः प्रधानौ शत्रुशल्यवीरमित्रौ । )

वीरमित्रः– आर्य शत्रुशल्य ! विचारभवनमेतन्महाराजेन नाद्याप्यलंकृतं ।

शत्रुशल्यः– सखे वीरमित्र ! यथा पुष्पावचयार्थं गतस्य सोमशर्मणो मौर्ख्येणावयोर्विलंबोभूत् तथा महाराजस्यापि ब्राह्मणमौर्ख्येणैव विलंब इति मन्यते मे मनः ।

वीरमित्रः– आर्य शत्रुशल्य ! सत्यवान् वत्सायाः सावित्र्याः स्वयंवरणमालिकामर्हति नार्हति वा । युष्माकमेतद्विषये कीदृङ्मतं ।

शत्रुशल्यः–सखे वीरमित्र ! यद्यपि सत्यवान् सर्वैः सद्गुणैः संपन्न एव । तथापि मामकं मनस्तु तेन सह सावित्र्याः स्वयंवरं कारयितुं वेपते । अतो महाराजो यदि तथा कर्तुं

स्वीयामिच्छां दर्शयिष्यति तथापि तथा न कर्तुमेकवारमहं प्रार्थयिष्ये। परं भवतां तत्र कीदृशं मतं।

वीरमित्रः– आर्य! मन्मतं तु युष्मन्मतानुसारेव। परं सावित्रीप्रेमपारतंत्र्यान्महाराजो नावयोर्विज्ञप्तिं श्रोष्यति।

शत्रुशल्यः–महाराज आवयोर्विज्ञप्तिं शृणोतु मा वा शृणोतु। परमावाभ्यां सांजलिबंधं सप्रणामं च विज्ञप्तिर्विधेयैव। यतोयमावयोर्धर्मः। तदेहात्रैव महाराजसिंहासनसमीप उपविशावः। (इत्युपविशतः।)

(ततः प्रविशति कंचुकिनोपदिश्यमानमार्गो देव्या मालव्या पुत्र्या सावित्र्या च सह महाराजोश्वपतिः।)

प्रधानौ– (उत्थाय।) अयि महीमहेंद्र महाराज! परमदयामयाशये मातर्मालवि! इमौ युष्माकं किंकरकिंकरौ युष्मच्चरणकमलदर्शनेनेदानीमात्मानं कृतार्थं मन्येते।

मालवी– आर्य शत्रुशल्य! पवित्र वीरमित्र! कुशलिनौ युवां।

प्रधानौ– महाराजस्य देव्याश्च पुण्यप्रतापैः कुशलं नौ। युष्मांश्च कुशलिनो विलोक्य परमं परितोषमेतावयोः स्वांतं।

अश्वपतिः– अयि प्रियप्रधानौ! यावन्नेदं विचारभवनमलंकरोति महामुनिर्भगवान्नारदस्तावद्युवयोः पुत्र्याः सावित्र्याश्च कीदृशं विचारयेस्द्वासमस्तीति श्रोतुमिच्छावः।

शत्रुशल्यः– (उत्थाय सांजलिबंधं।) अयि महाराज अश्व-

पते! अयि मातर्मालवि! अयं जन आजन्मतो मनसा वचसा कर्मणा च युष्माकं श्रेयस्येव निबद्धबुद्धिरस्ति। ततः प्रार्थयति। यद्यपि कुलेन शीलेन विद्यया विनयेन विवेकेन स्वरूपेण सद्गुणैः पराक्रमैश्च सत्यवान् पुत्र्याः सावित्र्या अनुरूप एव। तथापि तदीया पदभ्रष्टतैतद्विपये विरुद्धतां धर्तुं प्रेरयति मद्बुद्धिम्। इदं महाराजेनैव विचार्य।

येयं शिरीषकुसुमाधिकसौकुमार्या
पुष्पास्तृतेपि शयने सुतनुः कुमार्याः।
म्लानिं मुहुर्व्रजति सा कथमेव भूमौ
स्वापं करिष्यति कुशांकलिते प्रदेशे॥ १०॥
स्वप्नेप्यदृष्टतुहिनातपवातवर्षा
हर्म्यास्पदेषु मणिमद्भवनेष्ववीपम्।
या न प्रतोषमुपयाति घने वने सा
स्थातुं प्रभो प्रभविता कथमेव बाला॥ ११॥
विद्युल्लतामपि विलोक्य विलोलनेत्रा
या त्रासमेति मृदुमंजुलचित्तवृत्तिः।
सेयं वराहमहिषर्क्षशृगालसिंहान्
दृष्ट्वा भजिष्यति भयं न कथं कथं वा॥ १२॥
तपर्तुतापांश्च हिमं हिमर्तोः
प्रावृट्सु झंझानिलझात्कृतानि।

स्वीयामिच्छां दर्शयिष्यति तथापि तथा न कर्तुमेकवारमहं प्रार्थयिष्ये । परं भवतां तत्र कीदृशं मतं ।

वीरमित्रः- आर्य ! मन्मतं तु युष्मन्मतानुसार्येव । पर सावित्रीप्रेमपारतंत्र्यान्महाराजो नावयोर्विज्ञप्तिं श्रोष्यति।

शत्रुशल्यः-महाराज आवयोर्विज्ञप्तिं शृणोतु मा वा शृणोतु। परमावाभ्यां सांजलिबंधं सप्रणामं च विज्ञप्तिर्विधेयैव । यतोयमावयोर्धर्मः । तदेहैव महाराजसिंहासनसमीप उपविशावः । (इत्युपविशतः ।)

(ततः प्रविशति कंचुकिनोपदिश्यमानमार्गो देव्या मालव्या पुत्र्या सावित्र्या च सह महाराजोश्वपतिः ।)

प्रधानौ- (उत्थाय ।) अयि महीमहेंद्र महाराज ! परमदयामयाशये मातर्मालवि ! इमौ युष्माकं किंकरकिंकरौ युष्मच्चरणकमलदर्शनेनेदानीमात्मानं कृतार्थं मन्येते ।

मालवी- आर्य शत्रुशल्य ! पवित्र वीरमित्र ! कुशलिनौ युवां ।

प्रधानौ- महाराजस्य देव्याश्च पुण्यप्रतापैः कुशलं नौ । युष्मांश्च कुशलिनो विलोक्य परमं परितोषमेत्यावयोः स्वांतं ।

अश्वपतिः- अयि प्रियप्रधानौ ! यावन्नेदं विचारभवनमलंकरोति महामुनिर्भगवान्नारदस्तावद्युवयोः पुत्र्याः सावित्र्याश्च कीदृशं विचारवैरूद्ध्यमस्तीति श्रोतुमिच्छावः ।

शत्रुशल्यः- (उत्थाय सांजलिबंधं ।) अयि महाराज अश्व-

पते ! अयि मातर्मालवि ! अयं जन आजन्मतो मनसा वचसा कर्मणा च युष्माकं श्रेयस्येव निवद्धबुद्धिरस्ति। ततः प्रार्थयति । यद्यपि कुलेन शीलेन विद्यया विनयेन विवेकेन स्वरूपेण सद्गुणैः पराक्रमैश्च सत्यवान् पुत्र्याः सावित्र्या अनुरूप एव । तथापि तदीया पदभ्रष्टतैतद्विपये विरुद्धतां धर्तुं प्रेरयति मद्बुद्धिम् । इदं महाराजेनैव विचार्य ।

येयं शिरीषकुसुमाधिकसौकुमार्या
पुष्पास्तृतेपि शयने सुतनुः कुमार्याः ।
म्लानिं मुहुर्व्रजति सा कथमेव भूमौ
स्वापं करिष्यति कुशांकलिते प्रदेशे ॥ १० ॥
स्वप्नेप्यदृष्टतुहिनातपवातवर्षा
हर्षास्पदेषु मणिमद्भवनेष्वपीयम् ।
या न प्रतोषमुपयाति घने वने सा
स्थातुं प्रभो प्रभविता कथमेव वाला ॥ ११ ॥
विद्युल्लतामपि विलोक्य विलोलनेत्रा
या त्रासमेति मृदुमंजुलचित्तवृत्तिः ।
सेयं वराहमहिपर्क्षश्टगालसिंहान्
दृष्ट्वा भजिष्यति भयं न कथं कथ वा ॥ १२ ॥
तपर्तुतापांश्च हिमं हिमर्तौः
प्रावृट्सु झंझानिलझात्कृतानि ।

तपोवनस्था कथमेव राजन्
सहिष्यतेसावतिकोमलांगी ॥ १२ ॥

तदतिदुर्घट एव सावित्र्याः सत्यवता सह स्वयंवर इति मे मतं। परं महाराजस्य मनोवृत्तिः प्रमाणं। (इत्युक्तोपविशति।)

अश्वपतिः– आर्य शत्रुशल्य! अनया युष्मद्वचनरचनया पदभ्रष्टतैव सत्यवति स्वयंवरानर्हताया मूलं नान्यदिति विदितं मया। यदि प्रथममेव तदीयप्रतिपक्षिपक्षमुन्मूल्य विधाय च राज्यासनस्थं सत्यवंतमनंतरं स्वयंवरकरणे कं दोषमाशंकते युष्मन्मनः।

शत्रुशल्यः–देव! यद्यपि तथा कृते नास्ति कश्चित्तादृशो दोषस्तथापि मन्मनस्तु तथा कर्तुं न परितोषमेति। न तन्निदानं च किमपि वेद्मि।

वीरमित्रः–देव! ममापि स्वांतं न परितुष्यसेतद्विषये। न च तन्निदानमपि विचारगोचरतामवतरति। तत एव प्राणनिर्विशेषया वत्सया सावित्र्या सह विचारवैषम्यमुत्पन्नम्।

मालवी– आर्य शत्रुशल्य! पवित्र वीरमित्र! युवामस्माकमस्साम्राज्यस्य चामतिमौ हितैषिणौ स्थस्ततो न यावत्परितोषमेति युष्मन्मनस्तावद्बलवदाग्रहग्रहग्रस्तायामपि सावित्र्यां न तस्यास्तेन सह स्वयंवरं कारयिष्यामीति निःशंकमवगंतव्यम्।

प्रधानौ– यद्यपि नास्त्याग्रहः कश्चिन्नौ तथापि स्वांतमेव तथा कर्तुं न प्रसीदति। ततस्तद्विषये भगवान्नारद एव प्रष्टव्यः।

(ततः प्रविशति कंचुकिनानुगम्यमानो नारदः।)

सर्वे– (अभ्युत्तिष्ठंति।)

नारदः–(सिंहासनमधिरुह्य तिष्ठति।)

अश्वपतिः–(कंचुकिनं प्रति।) कंचुकिन्! गच्छ स्वाधिकारमशून्यं कुरु।

कंचुकी– यथाज्ञा देवस्य। (इति निष्क्रांतः।)

अश्वपतिः– (नारदं प्रति।) अयि तपोराशे महात्मन्! एषा वत्सा सावित्री पदभ्रष्टस्य शाल्वदेशाधिपतेर्मन्मित्रस्य द्युमत्सेनस्य पुत्राय वत्साय सत्यवते स्वयंवरणमालामर्पयितुमिच्छति। प्रधानौ चेमौ पदभ्रष्टः सत्यवान् न स्वयंवरार्ह इति मत्वा न तत्र संमतिं वितरतस्ततस्तदीयान् गुणान् दोषांश्च श्रावयितुमनुग्रहं करिष्यथेत्याशासे। यतः पदभ्रष्टतारूपो दोषस्तु असिलतामात्रसहायेनापि मया समुत्सारयितुं शक्यस्ततोहं तु पदभ्रष्टतां दोषगणनायां नैव गणयामि।

नारदः– (क्षणं विचार्य।)

> नरवर नहि सत्यवत्समानो
> ऽपर इह भूमितले वरोस्ति पुंस्यः।

अपि सुरपुरि वा न नागलोके
तदिह तदीयरिपूनयस्व नाशम् ॥ १४ ॥

सावित्री– ( स्वगतं । ) भगवतो महामुनेर्नारदस्य भद्रमुद्रं भूयात् ।

नारदः– राजन् ! किमहं वत्सस्य सत्यवतो गुणान् वर्णयामि । अशेषराजकुमारशिरोमणिः स खलु ।

विद्या विवेकविनयार्जवधैर्यहृद्या
शौर्यं क्षमान्वितमनन्यसमं कवित्वम् ।
शक्तिश्च भक्तिरपि तातपदाब्जयुग्मे
तस्यास्ति या न खलु सा तु परत्र दृष्टा ॥ १५ ॥

औदार्यमप्रतिममार्यजनंवदत्वं
सौशील्यमप्यनुपमं सहजं च धैर्यम् ।
सर्वेपि तस्य सुगुणा जगतीतलेऽस्मि-
श्चेतश्चमत्कृतिकरा इति मे वितर्कः ॥ १६ ॥

प्रत्येकतत्सुगुणवर्णनमादरेण
पृथ्वीश चेदिह करोमि तदा भवंधाः ।
प्रत्येकतद्गुणमसंख्यतरा भवेयु-
स्तस्माद्वदामि नृपतेल्पतमैर्वचोभिः ॥ १७ ॥

विद्यया वयसा विनयेन विवेकेन कुलेन शीलेन सर्वैश्चेतरैरपि लोकोत्तरैः सद्गुणैर्वत्सायाः सावित्र्याः स एव राजकुमारः सत्यवाननुरूपो वर इति मे मतं ।

**मालवी**- भगवन्! वत्सस्य सत्यवतः सर्वेपि सद्गुणा वर्णिताः । परमद्यावधि न तदीयायुर्विषये किमप्युक्तं कृपालुना । तदिदानीमायुर्विषयेपि श्रोतुमिच्छामि ।

**नारदः**-देवि! तदपि विचार्य ब्रवीमि। (क्षणं नेत्रे निमील्य स्वगतं।)

हरि हरि हरि हंत हंत हाहा-
वगतमिदं न मयापि दुःखमूलम्।
अयमनुपमसद्गुणामृताब्धि-
र्वहति हि वत्सरमात्रशेषमायुः ॥ १८ ॥

(प्रकाशं।) वत्स अश्वपते! वत्से मालवि! आर्य शत्रुशल्यवीरमित्रौ! यद्यपि वत्सस्य सत्यवतो निष्प्रतिमा निःसीमानश्च सद्गुणगणाः समुल्लसंत्येव । तथापि तस्य सर्वान् गुणानाक्रम्यैको महान् दोषो जागर्ति यदस्य वत्सरमात्रमायुः शेषमिति । ततोहमस्या वत्सायाः सावित्र्या वत्सेन सत्यवता सह स्वयंवरं कारयितुं न कथमपि संमतिं दातुं शक्नोमि। (इत्युक्त्वा तूष्णीं तिष्ठति।)

**अश्वपतिः मालवी च**-(दुःखान्मूर्छां नाटयति।)

**सावित्री**-(मूर्छया सिंहासनात्पतति।)

**प्रधानौ**-(पटांचलेन सर्वान् वीजयंतौ।) देव! समाश्वसिहि समाश्वसिहि। देवि! समाश्वसिहि समाश्वसिहि। वत्से

साविञि ! समाश्वसिहि समाश्वसिहि ।

**नारदः**– वत्स अश्वपते ! धैर्यं खलु धीराणामापत्सु शरणं । तद्धैर्यमेव धार्यं वत्सेन वत्सया मालव्या वत्सया सावित्र्या च ।

**अश्वपतिः**– ( संज्ञामुपलभ्य । ) हा दैव किमिदमकस्मादापतितं । हा आर्य राजर्षे द्युमत्सेन ! हा आर्ये शैव्ये ! वंचितौ युवां वामेन विधिना । हा वत्सरादनंतरं गुणरत्नरत्नाकरः शोषमुपैष्यति । हा शौर्यधैर्यदयौदार्याणामालयो लयमुपैष्यति । हा लोकोत्तरः पुत्रधर्मो निराधारो भविष्यति । हा विधे ! निरुपमतमपरमाणुसहस्रैः परशतैः प्रयासैः परमया च प्रयत्नपरंपरया निःसंख्यगुणनिधानमनर्घ्यमप्रमितं च किमपि मानवाभिधानं रत्नं समुत्पाद्य पुनरचिरादेव तत्प्रणाशयसि । कीदृशीयं तेऽविमृश्यकारिता कीदृशीयं ते निर्दयता कीदृशीयं च ते कठिनता हृदयस्य ।

**मालवी**– हा कृतांत ! परमधर्मनिष्ठस्य राजर्षेर्द्युमत्सेनस्य निष्प्रतिमे तपस्यपि न दत्ता दृष्टिः । निर्व्यलीका शिवभक्तिरपि न विलोकिता । अगण्यानि पुण्यान्यपि न चिंतितानि । हा परमपवित्रचरित्रयोस्तयोर्दंपत्योः पदभ्रष्टतां निराधारतामंधतां चापि विलोक्य नोत्पत्स्यति दयांकुरो हृदयांतराले ते । ( इत्युभौ विलपतः । )

**सावित्री**– ( पुनर्मूर्छया पतति । )

प्रधानौ– ( पटांचलेन वीजयतः । )

नारदः– वत्स अश्वपते ! वत्से मालवि ! पुत्रि सावित्रि ! नियतिनियमनिर्मिते वस्तुनि किं प्रतिविधेयं । यत्रेश्वरा अपि कुंठितप्रतिक्रियाप्रसरास्तत्र कैव गणना पामराणां नराणां । तद्धैर्यमेव धार्यतां ।

अश्वपतिः– भगवन् । धैर्ये धृतमपि चेत एतन्मे मुहुर्मुहुः स्खलति । यतः–

दुःखं द्विधाप्युपगतं यदियं सुता मे
ह्यासत्यवत्यभिरताल्पतरायुषीह ।
यद्यापि पुत्रमरणं स्थविरस्य राज्ञो
मित्रस्य मेत्र भवितेति हहा हतोस्मि ॥ १९॥

नारदः– वत्स ! दिष्टनिर्दिष्टं वस्तु प्रतीपयितुं प्रतापिनोप्यसमप्रतापा इति किं नविदितं ते ।

मालवी– आर्यपुत्र । भवलबलपरिवृत्तोप्यबल एव देवो दानवो मानवो वा भगवत्या भवितव्यताया अग्रे । तदलं विषादेन । किंतु किंकर्तव्यतामूढैरस्माभिः किंकर्तव्यमिदानीमिति भगवान् नारद एव प्रष्टव्यः ।

अश्वपतिः– ( नारदंप्रति । ) भगवन् ! अवश्यं भाविनो भावानन्यथा भावयितुं न प्रभवंति त्रिभुवनप्रभवोपीति नाविदितं केषामपि । तदिदानीमत्र भवद्भिरभिधेयं सा-

वित्रीस्वयंवरविषये किंविधेयमस्माभिरिति।

नारदः–पुत्र्या सावित्र्या तु स्वानुरूपापरवरान्वेषणाय पुनः पृथ्वीपर्यटनं विधेयमिति मे मतं।

अश्वपतिः–यथाज्ञा भगवतः। (इत्युक्त्वा सावित्रींमति।) वत्से! पुनरपि विधेयं पृथ्वीपर्यटनं वत्सया स्वानुरूपपरवरान्वेषणाय।

सावित्री– (निरुत्तरं लज्जावनम्रवदना तिष्ठति।)

मालवी– वत्से! बहुरत्ना वसुंधरेति लोकोक्तिर्न मृषा। तत्स्वपितुराज्ञां कुसुममालामिव मूर्ध्नि निधाय निजानुरूपमपरं वरमन्वेष्टुं पुनः पृथ्वीपर्यटनं विधेहि।

सावित्री– (सिंहासनादुत्थाय दीर्घं निःश्वस्य अविरलगलदश्रुसलिले लोचने वसनांचलेन परामृज्य।) अयि मातश्चिरविरहविवर्णां प्रियसखीमिव मे विशालां पुस्तकशालां संभावयितुं गच्छामि। (इत्युक्त्वा सर्वान् प्रणम्य निष्क्रामति।)

अश्वपतिः– (नारदंमति।) भगवन्! वत्सा सावित्री नान्यं वरं वरिष्यतीति तदीयमिदानींतनमौदास्यमेव निवेदयति।

नारदः– ममाप्येवमेव प्रतिभाति। परमपवित्रचरित्रा खलु सा पुत्री। तदहमपि तत्कृते किमपि विचारयामि। (इत्युक्त्वा गगनमार्गेणांतर्हितो भवति।)

अश्वपतिः–(ऊर्ध्वं विलोक्य स्वगतं) लोचनपथमतिक्रांत-

एत्र भगवान् भक्तवत्सलो महामुनिः । कदा पुनस्तद्दर्
नसुखानुभवभाजनं भविष्यामि । (प्रकाशं ।) प्रिये
भगवतो नारदस्यापि न संमतिः सावित्र्याः सत्यवता स
स्वयंवरकरणे ।

मालवी– आर्यपुत्र ! समस्तप्रशस्तगुणरत्नरत्नाकरेणापि
वत्सेन सत्यवता सह स्वयंवरकरण एतयोः प्रधानयोरपि
स्वांतं न परितोषमभजत्तत्राप्यविज्ञातमपि तदीयमल
मायुरेव निदानमिति तर्कयामि । यतः–

कृत्येषु भाविभावानामशुभस्य शुभस्य योः ।
चित्तासंतोषसंतोषौ सूचकाविति मे मतिः ॥ २० ॥

अश्वपतिः–अथ किं । तावपि किलास्मदीयसुखदुःखसमभा-
गभोगिनौ ततः संभवत्येतत् । परं भगवता नारदेन
मया देव्या च पुनः पृथ्वीपर्यटनायाज्ञप्तापि सावित्री
नान्यं वरमन्वेष्टुं गमिष्यतीति औदास्यभरभिन्नवर्णया
निःश्वासपरंपरापरिशुष्यदधरया अविरलगलदश्रुजाल-
लोहितलोचनया तन्मुखमुद्रयैव निवेदितं । तथापि तस्याः
प्रियसख्यौ मालतीमाधव्यौ तत्समीपे प्रेषणीये । यदि क-
दाचित्तदीयां प्रार्थनामंगीकुर्यात् ।

नेपथ्ये–शर्वरीरमण एष शार्वरं संहरन् हृदयदुःखदं तमः ।
व्योममध्यमधिरूढ उल्लसत्यथ पूर्ण इव सन्मनोरथः ॥२१॥

अश्वपतिः– अहो किं गगनमध्यमधिरूढो भगवान् भर्ग-

भूपणं रोहिणीरमणस्तत्प्रयांतु सर्वेपि स्वस्वस्थानानि ।

प्रधानौ– ( प्रणामं कृत्वा निष्क्रांतौ । )

अश्वपतिः– ( मालव्या सह प्रतीहारोपदिश्यमानमार्गो निष्क्रांतः । )

( ततः प्रविशति पुस्तकशालामध्यगता सावित्री । )

सावित्री– अहो हृदयप्रियाणि मे पुस्तकानि । यद्यपि युष्माकं शुभाश्रयात् यो योनुभूतो मया लाभस्तं तं वक्तुं नैका मे रसना शक्नोति । तथापि

> शास्त्रैस्तु यच्च परलोकजये महास्त्रै-
> र्व्यासैश्च नैगमगिरां विमलेतिहासैः ।
> यद्यत्किमप्युपकृतं मयि वापुराणै-
> स्तत्तत्कथं कथमहो बत विस्मरेयम् ॥ २२ ॥
> श्राव्यैर्महाकविमनोजनिभिः सुकाव्यैः
> कोशैस्तृणीकृतसमस्तसुरत्नकोशैः ।
> यद्यत्किमप्युपकृतं नितरां भवद्भि-
> स्तत्तत्कथं कथमहो बत विस्मरेयम् ॥ २३ ॥

( अन्यतोविलोक्य । )

> यद्यत्कथाभिरिह दर्शितसत्पथाभि-
> र्वत्स्थानकैरतिमुदां सुकथानकैर्वा ।
> स्निग्धैरिवोपकृतमस्ति मयीष्टमित्रै-
> स्तत्तत्कथं कथमहो बत विस्मरेयम् ॥ २४ ॥

( पुनरन्यतो विलोक्य । )

सत्पद्यगद्यनिरवद्यतराभिराभि-
श्चंपूभिरुत्तमतमैश्च सुनाटकैर्वा ।
यद्यच्च मय्युपकृतं प्रतिवेलमेभि-
स्तद्विस्मरिष्यति कथं हृदयं ममैतत् ॥ २९ ॥

हा हंत तथापि परमदयामृतमयानां तातचरणानामाज्ञया स्वानुरूपवरान्वेषणाय विहितविविधदेशाटनया न मया संवत्सरात्प्रभृति संभावनापि युष्माकं विहिता । इदानीं तु जीर्णारण्यशून्यो निःसारः खलु सकलोपि संसारः प्रतिभाति मे । गता शास्त्रविचारवेला । प्रोषितः काव्यविनोदावसरो विलीनः साहित्यसेवासमयः । किंबहुना जीवनप्रयोजनमपि प्रणष्टमेव युष्मद्गुणविक्रीतस्वांतायाः सावित्र्यास्तदियं चरमा प्रणाममाला मे । ( इत्युक्त्वा प्रणमति । पुनरुत्थाय कृतांजलिः साश्रुसलिललोचना सती । )

हे शास्त्राणि महेतिहासनिकरा हे हे पुराणोध्वया
हे सत्काव्यकथाकथानकगणाश्चंप्वश्च हेत्यद्भुताः ।
नानानाटकरत्नपुंजनिहितो युष्मभ्यमेषोंजलिः
सावित्र्या यदियं न वः परिचयं कर्तुं क्षमा सांप्रतं २८.

( कथापुस्तकद्वयं च हस्तेन गृहित्वा । ) अहो अपरमिव हृदयं द्वितीय इवात्मापर इवोच्छ्वासो मे कथाद्वयमेतत् ।

हंत मालतीं माधवीं चातिशेत एतत् । यदुभेपि ते मालती माधव्याविव मद्दुःखदुःखिते इव शून्यशून्ये इव विस्मृतविनोदे इव च लक्ष्येते । मालतीमाधव्योरिवानयोरपि क्षणार्द्धमपि विरहो दुःसहो मे। हा हंतातिदीर्घे देशाटने परमाल्हादमग्नमानसां मां विधाय याभ्यां मातापितृचरणपरिचर्यापरिचयवियोगदुःखस्य विस्मारिताहं ते अपीमे कथापुस्तके इदानीं नाल्हादलेशमपि जनयतः। हा किं करोमि क्व गच्छामि कथं मे श्रेयः कथं मे हितं चेति नावगच्छामि । मद्दुःखदुःखिते मालतीमाधव्यावपि नात्र संनिहिते याभ्यां दुःखमिदं निवेदयामि।

( इति भ्रलपंती निःश्वस्य भूमावुपविशति । )

( ततः प्रविशतो मालतीमाधव्यौ । )

माधवी– सखि मालति ! दृष्टः प्रियसख्याः सावित्र्या आवयोर्विषये प्रेमातिरेकः । सा खलु परोक्षे पुस्तकैः सह संवदंत्यपि न विस्मरति स्वीयमगुणमपि सखीजनं ।

मालती– शोभते तादृशानां तादृशमेव प्रेम ।

माधवी– अस्ति चेदिच्छा भूयोपि मधुराणि तद्वचनानि तूष्णीं स्थित्वा शृणुवः ।

मालती– नहि । नहि सखिविलंबावलंबनं मदीयं मनः स्वीकरोति । यस्मिन् क्षण एव परमपविनाशयया मात्रा मालव्या दयामृतमयाशयेन च पित्राश्वपतिना समाज्ञप्तास्मि ततः प्रभृत्येव सावित्री कया रीत्या केन प्रय-

स्तेन कतमेन चोपदेशेन मातापित्रोर्मतमनुसारयितव्येति महती मे चिंता। तदेहि तदीयं पुस्तकलग्नं मन आवां मत्याकर्षावः। (इत्युभौ सावित्रीसमीपमुपेत्य।) इयं नः प्रियसखी सावित्री।

करकमलतलोल्लसत्कपोला
गलदतुलाश्रुजला विनिःश्वसंती।
किमपि किमपि हंत शून्यचित्ता
प्रलपति गद्गदगीः स्वपुस्तकाग्रे ॥ २७ ॥

नैषा शून्यहृदया संनिहिते अप्यावां पश्यति। तत्किमपि वदावः।

मालती– एवं करोमि। (सावित्रीमभि।) अयि भर्तृदारिके! वपुस्त्वनामयं ते।

सावित्री–(अनाकर्णितकेन कथापुस्तकद्वयं प्रति।) अयि मन्मनोविश्रामारामभूमे मुदितमदालक्ष्मि! अयि प्राणप्रिये मे प्रसन्नपार्वति! युवां मालतीमाधव्याविव मे हृदयसर्वस्वं। तद्वदतं किमिदानीं मयाविधेयं कथं च मे श्रेय इति। (पुनर्निःश्वस्य।) हा हृदयप्रिये कथे अपीये न प्रत्युत्तरमर्पयतः। अथवा प्रतिकूलनिष्ठे दिष्टे न कश्चिद्बंधुर्बंधुतां दर्शयितुं प्रभवति। तन्नैतयोरपराधः। भवतु। हृदयमेव पृच्छामि।

वितरति न निजाज्ञामत्र तातो न माता
मुनिरपि च सुराणां मंमतिं न स्वकीयाम्।

कथमिव गुणवंतं प्राप्नुयां सत्यवंतं
हृदय हृदयनाथं किंकरोमि क्व यामि ॥ २८ ॥

मालती }
माधवी } –प्रियसखि ! अनामयं वपुस्ते ।

**सावित्री**–( स्वगतं । ) धिक् प्रमादः । प्रियसखीभ्यां मालतीमाधवीभ्यामपि मे विदितोभिप्रायः । अथवा किं हृदयादपि गोप्यं । ( प्रकाशं । ) अयि प्रियसख्यौ मे मालतीमाधव्यौ !–

वपुरनामयमप्रतिमं च त–
त्सकलसद्गुणभूषणभूषितम् ।
किमपि वाङ्मनसाविषयं प्रिये
जयति तस्य कुसद्विजयश्रियः ॥ २९ ॥

एतत्तु आर्यौ शत्रुशल्यवीरमित्रावपि स्वीकुरुतो यद्वपुषोऽनामयत्वे विद्वत्वे वीरत्वे धीरत्वे चाद्वितैव तस्येति । केवलं तदीयपदभ्रष्टतैव प्रधानयोरसंमतौ हेतुरासीत् । सोपि तातचरणैर्न गणितः । तातचरणानामसंमतिसंपादकं तु भगवतो देवर्षेश्चरमं वच एव समभूत् । इदानीं किं कर्तव्यं क्व गंतव्यं कथं च श्रेय इत्येतद्भवतीभ्यामेव वक्तव्यं ।

**सख्यौ**– भर्तृदारिके ! आवाभ्यां भवत्या वपुषोऽनामये पृष्टं त्वं पुनः किमप्यन्यदेव भणसि ।

**सावित्री**–( ईषल्लज्जां नाटयंती । ) सख्यौ ! क्षंतव्यं

भवतीभ्यां। वपुस्तु मे निरामयमेव। केवलमियमेव मनो-
व्यथा कथापथातीतं वैरूप्यं वितरति। तेन मत्तेवोन्मत्ते-
व ग्रहगृहीतेव च जातास्मि।

मालती– अयि भर्तृदारिके! विदिताशेषशास्त्रहृदयां सुज्ञां विचारवतीं च भवतींप्रति किं विज्ञाप्यं मंदबुद्धिभ्यामावाभ्यां। तथापि सखीस्नेहो वाचालयति नौ स्वांतं। प्रियसखि! यस्मिन्विषये निर्निमित्तनिःसीमवात्सल्यौ मातापितरौ न संमतिमर्पयेतां तत्कार्यं न कदाचिदपि कार्यमित्यार्याणामस्ति धर्मः।

माधवी– मालत्याः सूक्तिः समुचितैव मे प्रतिभाति। प्रति–स्त्रीधर्मपुस्तकं विलोकितं श्रुतमधीतं च प्रियसख्या तत्। यत् स्त्रीभिः पाणिग्रहणविधेः प्राक् मातापित्राज्ञापरतंत्राभिर्भाव्यमिति। ततो भवत्यापि मातापित्राज्ञा परिपाल्यैव। तावपि चास्मद्धितायैव तथा कर्तुं निषेधतः। अस्मद्धितविषये च यादृशी मातापित्रोश्चिंता भवेत्तादृशी कस्यापरस्य भवेत्।

मालती– तावप्येतादृशं प्रियसख्या आग्रहं विलोक्य न कदाचित्त्वां न्यषेधिष्यतां यदि भगवान् नारदो नाविरुद्धविचारोऽभविष्यत्। परं यत्र महामुनिर्नारदोपि न संमतिमर्पयेद्वर्षमात्रमायुश्च कथयेत्तत्र कथं तयोर्मनस्तथाकर्तुं स्वीकुर्यात्। तत्पुनर्देशाटनं विधीयतां। बहुरत्ना

वसुंधरासीति परोपि राजकुमारः प्रियसख्याश्चित्तवृत्तिविश्रामारामतां भजिष्यत्येव।

माधवी– मालसाः प्रतिवाक्यं प्रतिपदं प्रत्यक्षरं च मे संमतिरस्ति।

सावित्री– (क्षणं तूर्ष्णीं स्थित्वा दीर्घमुष्णं च निःश्वस्य।) प्रियसख्यौ! आजन्मतो भवतीभ्यां सहैवेयं वृद्धिमुपगता मंदभागिनी तत्तदीयस्वांतविचारेष्वपि नानभिज्ञे भवत्यौ। तथापीदानीं अनभिज्ञे इव मातापित्रोराज्ञापालनविषये उपदिशथः। किमहं मातापितरौ प्रति पुत्र्याः कीदृशोस्ति धर्म इत्येतावन्मात्रमपि न जानामि? पवित्रचरित्राणां परमकृपालूनां विद्यागुरूणां कृपया जानामि सम्यक् स्वकीयमखिलं धर्मं। शृणुतं।

> याभ्यामकारि सततं परिपालनं मे
> संलालनं च परिपोषणमादरेण।
> पित्रोस्तयोर्न शिरसा कथमभ्यनुज्ञां
> सख्यौ वहाम्यतुलवत्सलतैकपात्रोः॥ २०॥

मालती– (स्वगतं।) फलितमिदानीं मातापित्रोर्मनोरथपादपेण। (प्रकाशं।) शोभते तादृश एव विचारस्तावकीनः।

सावित्री– सततं सुखानि विविधानि च मत्कृते यौ
दुःखान्यनुक्षणमुभावपि हा सहेते।

पित्रोस्तयोर्न शिरसा कथमभ्यनुज्ञां
सख्यौ वहाम्यतुलवत्सलतैकधाम्नोः ॥ ३१ ॥

माधवी– एवमेवोचितं प्रियसख्या मे ।

सावित्री– प्राणादपि प्रियतमास्मि ययोरिहाहं

सर्वस्वमस्मि हृदयस्य ययोश्च सख्यौ ।
पित्रोस्तयोर्न शिरसा कथमभ्यनुज्ञा-
मेनां वहाम्यतुलवत्सलतैकधाम्नोः ॥ ३२ ॥

किंबहुना प्राणव्ययेनापि विहितं मातापितृपरमाज्ञापालनं न वाच्यतामुपयातीत्यसंशयं विदितं मे । तथापि पृथक्तः स्त्रीणां मातापितरौ प्रति कीदृशोस्ति धर्म इति विलोकनीयं तथैवापरतः स्त्रीणां स्वकीयप्राणनाथं प्रति कीदृशोस्ति धर्म इत्यपि विलोकनीयं । सत्कुलसंभवाभिः स्त्रीभिरेकं पतिं परित्यज्यापरो विधेय इति कापि श्रुतिः कापि स्मृतिः किमपि शास्त्रं कोपीतिहासः कापि कथा किमपि कथानकं वा कथयिष्यति किं ।

मालती– ( स्वगतं । ) हा सूर्पंव मे तर्कः । ( प्रकाशं । ) भर्तृदारिके ! विपरीतमेवैतत्किमपि ब्रूषे ।

माधवी– ( स्वगतं । ) हा हृदय ! हताशमसीदानीं । ( प्रकाशं । ) सखि सावित्रि ! भूतार्थमाह मालती । यतः–

प्रियसखि न वृतोयं स त्वयापीह वाचा
हृदि न वरणमाल्याप्यर्पिता तस्य साक्षात् ।

पथि कथमपि दृष्टस्तावतैव त्वदीयः
कथय कथमयं स्यात्सखवान् प्राणनाथः ॥ ३३ ॥

सावित्री– प्रियसख्यौ मे ।

ऊरीकरोमि न मया वचसा वृतोयं
नैवार्पितापि च गले वरणस्य माला ।
यस्मिन् क्षणे परमभून्नयनातिथिर्मे
कृप्तस्तदैव हृदये हृदयेश्वरोयम् ॥ ३४ ॥

तदिदानीं भवतु तस्य वर्षसहस्रपरिमितमायुर्वर्षमात्रं वा ।
मम तु स एव प्राणनाथः स एव हृदयदैवतं स एव च संसारसर्वस्वं । इदमेव महत्कष्टम् यत्–

जननीजनकौ न संमतिं
ददतस्तद्वरणाय सांप्रतम् ।
मम चापि मनस्ततः परं
न वरं वांछति हा करोमि किम् ॥३५॥

(इत्युक्त्वा मूर्छां नाटयति ।)

नेपथ्ये– वत्से सावित्रि तां चिंतां स्वल्पायुर्विषयां त्यज ।
जागर्ति वटसावित्रीव्रतमायुष्करं वरम् ॥ ३६ ॥

सावित्री– (संज्ञामुपलभ्योत्थाय च ।) अहो केनेदममृतमभिवृष्टं मे श्रवणयोः। (परितोवलोक्य।) हा न कश्चिदत्र दृश्यते । धिक् प्रमादः । स्वप्नेनैव वंचितास्मि । (इति निःश्वासं मुंचति ।)

( ततः प्रविशत्यंतर्हितमप्सरोयुगलं। )

एका– सखि चंद्रिके ! परमदयालुना भगवता देवर्षिणा व-त्साया: सावित्र्याः स्वांतपरितापोपशमनसाधनभूतवटसा-वित्रीव्रतोपदेशायाज्ञप्ते स्वस्तंदेहि अंतरिक्षस्थिते एव तद्वि-षयं किमपि कवितया ब्रूवः।

द्वितीया– अयि बकुलावलि ! एवं कुर्वः। ( उभौ सहै-व गायतः। )

अलमलमलमालि प्राणसंदेहकर्त्र्या
निजजनसुखहर्त्र्याऽनंतया चिंतया ते।
कुरु कुरु वटसावित्रीव्रतं लप्स्यतेस्मात्
स तव हृदयनाथः सत्यवान् दीर्घमायुः॥ २७॥
नैराश्यमावहसि किं निजजीवितेस्मि-
न्नौदास्यदास्यमधुनापि किमर्थमेतत्।
कृत्वा व्रतं गिरिसुताशिवयोः प्रसाद-
द्दीर्घायुषं वरय पुत्रि वरं तमेव॥ २८॥

( इत्युक्त्वांतर्हिते भवतः। )

सावित्री– ( साश्चर्यानंदमुत्थाय। ) प्रियसखि मालति ! प्रियसखि माधवि ! वटसावित्रीव्रताचरणमेव मदीय-हृदयदयितायुःपोषणकरमित्यधुना या श्रुतास्माभिः कविता तस्या आशयो लक्ष्यते। उपदिष्टं चैतत्प्रायो द-यार्द्रहृदयेन भगवता नारदेनेति मन्ये। तद्गच्छतं त्वरया

मातापित्रोः समीपं कुरुतं च तौ परमाल्हादमग्नमानसावेत न्मंगलिवृत्तांतनिवेदनेन । अनंतरं च कुर्वतु तातपादा मे व्रतमेतत्कदा कर्तव्यं कथं कर्तव्यं कश्च विधिस्तस्येत्यादि निखिलं निर्णयं शास्त्रज्ञेभ्यो ब्राह्मणेभ्यः । ततश्च तदनुज्ञानुसारेण व्रतमेतदहं परमया श्रद्धया करिष्यामि ।

सख्यौ– भर्तृदारिके! साधयावस्तर्हि भवतीमनोभीष्टसिद्धीः ।

(इत्युक्त्वा निष्क्रांते मालतीमाधव्यौ ।)

सावित्री– गते मालतीमाधव्यौ । अहमपीदानीं शिवपूजनाय गच्छामि । (इत्युक्त्वा निष्क्रांता ।)

(ततः प्रविशति देव्या शैव्यया सहितो द्युमत्सेनः ।)

शैव्या– आर्यपुत्र! अद्य कश्चित्तपोवन एतस्मिन्नुपद्रवो भविष्यतीति मे प्रतिभाति ।

द्युमत्सेनः– कथमवगतं देव्या ।

शैव्या– आर्यपुत्र! सूर्योदयादारभ्याद्य कश्चित्कोलाहलः श्रूयते ततोनुमीयते काचिच्चमूः समागच्छतीति ।

द्युमत्सेनः– भविष्यति कस्यचिन्मृगयार्थे समागतस्य भूपतेः सेना सा । यदस्तु तदस्तु । किं तेन । वयं तु सदाशिवपदार्हणामेव प्रारंभामहे ।

शैव्या– प्राणनाथ! श्रीमताम् आज्ञां स्वीकरोमि । परंतु तपोवने मृगयारसलालसानामागमनमसंभावितमिति मत्वा चिंताशतचुंबि भवति चेतो मे ।

द्युमत्सेनः– प्रिये!

चिंताशोकभयस्थानं धनमार्यजना जगुः ।
शिवार्चनधनानां नः कुतश्चिंता कुतो भयम् ॥ ३९ ॥

शैव्या- प्राणनाथ ! शंकेऽसद्राज्यापहारकश्चंडसेन एवागच्छतीति ।

द्युमत्सेनः- देवि ! निष्प्रयोजनमत्राद्य तदागमनं ।

शैव्या- आर्यपुत्र ! निष्कपटा निष्कपटानेव सर्वान् पश्यंति भवादृशा भव्याः । परं-

ईर्ष्यासह्यगलत्कुष्टा दुष्टा वीक्ष्यैव दुःखितान् ।
अन्यानन्यायिनस्तुष्टा भवंति प्रतिवासरम् ॥ ४० ॥

मम तु वत्सः सत्यवानद्यापि फलमूलान्यादाय वनात्प्रतिनिवृत्तः । हा किं भविष्यति ।

( ततः । प्रविशति सत्यवान् । )

सत्यवान्- अयि मातरयि पितरेष सत्यवान् वः प्रणमति ।

उभौ- ( साश्चर्यानंदं । ) वत्स वत्स ! किं समागतस्त्वं । अद्यावधि तवैव चिंतया व्याकुलं नौ स्वांतमभूत् ।

सत्य०- अयि मे पितरौ नित्यं दयामृतमयाशयौ ।
युष्मत्प्रताप एवास्ति मद्रक्षैकमहामणिः ॥ ४१ ॥

तन्न मद्विषये कापि चिंता विधेया ।

द्युमत्सेनः- वत्स ! कोयं तपोवनेऽस्मिन्कोलाहलः श्रूयते ।

सत्यवान्- आर्य ! फलानि पातयता पुष्पाण्यवचिन्वता समिधश्च दारयता मया दूरे जायमानः स कोलाहलः

श्रुतः। परं शिवार्चनविलंबभिया न तस्मिन् दत्तदृष्टिर-
भवं। इदानीमाज्ञा चेद्भवेत्ता निश्चयं करोमि कैरयं विधीयते
कोलाहल इति।

शैब्या– नहि नहि नहि वत्स तत्र गंतुं
समनुमतिं वितराव एव तुभ्यम्।
रिपुजनचतुरंगिणी भवेत्सा
यदि वत तर्हि भवेन्महाननर्थः॥ ४२॥

सत्यवान्– यदि रिपुचतुरंगिणी भवेत्सा
किमिह ततोपि भयं ममास्ति मातः।
गुरुजनकृपयासिमात्रमित्रो–
प्यखिलममित्रबलं निषूदयिष्ये॥ ४३॥

नेपथ्ये– महाराज महाराज महाराज निजान् जनान्।
त्राहि त्राहि त्राहि नस्त्वं क्षत्रधर्मधुरंधर॥ ४४॥

कस्यापि भूमिरमणस्य नरेंद्र सेना
पृच्छंत्यसौ तव तपोवनमेति तूर्णम्।
पुत्रप्रिया अपि यया तरवोस्मदीया
उन्मूलिताः सलिलसेकविवर्धितास्ते॥ ४५॥

हा अस्माभिः पुत्रनिर्विशेषप्रेम्णा पालिता लालिताः पो-
षिता बालतरवो बाललतिकाश्च सर्वा मूलत उन्मूलिताः
सेनयानया। सकलाश्रमजनकामधेनवो धेनवो वत्सा वत्स-
तर्यो विश्वस्ताश्चान्ये आश्रमपशव आश्रमपक्षिणश्च तत्रा-

सादतिदीना धैर्यहीनाः क विलीना इति न ज्ञायंते । मृगाजिनानां व्याघ्राजिनानां कुशासनानां दंडानां कमंडलूनां च कथापि का कथनीया । सर्वं जन्मत आरभ्याद्यावधि नेदृश आश्रमोपप्लवः कदाचिद्दृष्टपूर्वोऽस्माभिः ।

सत्यवान्–( स्वगतं । ) अहो! अदृष्टपूर्वसेनावलोकनसंत्रस्तानां मुनीनां कोलाहलः श्रूयते तदाश्वासयाम्येतान् । ( प्रकाशम् । )

मा भयं भजत भो मुनिवर्या<br>
एष हन्म्यसिलतैकसहायः ।<br>
तं चमूचयमहं क्षणमात्रा–<br>
दाज्ञयैव मम मान्यगुरूणाम् ॥ ४६ ॥

अन्विष्य चान्विष्य मया जितास्ते<br>
धेनूः सवत्सा वनपक्षिणश्च ।<br>
समर्पयिष्यंति भवद्भ्य एते<br>
मुक्तान् करिष्यामि न तद्विना तान् ॥ ४७ ॥

लतास्तरूंश्चापि नवालवाले-<br>
ष्वारोप्य संसिच्य जलैः समस्तान् ।<br>
क्षमापयिष्यंति च वः प्रणम्रा<br>
यदा तदा मोक्ष्यति तानसिर्मे ॥ ४८ ॥

तन्निश्चिता भवंतु भवंतः । ( द्युमत्सेनं प्रति । )

आज्ञापयाज्ञापय मां विलंबा-

लवं न सोढुं हृदयं क्षमं मे ।
चमूसमूहं तु समीपमासं
कोलाहलः शंसति यत्तदीयः ॥ ४९ ॥

द्युमत्सेनः– अयि वत्स सत्यवन् !
नैनया सेनया योद्धुं लामाङ्गमुं क्षमोस्म्यहम् ।
तस्मान्मंत्रबलेनैषा मया परिसमाप्यते ॥ ५० ॥

(इत्युक्त्वा हव्यद्रव्यमादाय मंत्रं पठति । सन्निमित्त-
मभिनीय स्वगतं ।)

चमूसमूहमलयं विधातुं
वांछाम्यहं मंत्रबलेन सद्यः ।
मनश्च मंगानि किमप्यपूर्वं
शुभं मुहुः संप्रति सूचयंति ॥ ५१ ॥

तत्समुचितं क्षणं विचारयितुं। अविमृश्यकारिता हि संताप-
यति स्वांतं यावज्जीवं जनानां। ( इत्युक्त्वा हव्यद्रव्यमधः
संस्थाप्य तूष्णीं तिष्ठति । )

नेपथ्ये–पुत्रप्रेम्णा पालितो लालितश्चा-
नेकैर्यत्नैः साधु संपोषितो यः ।
सोयं बालो हंत धाराकदंबो
हाहा सेनाहस्तिनोन्मूल्यते हा ॥ ५२ ॥

सत्यवान्– ( श्रुत्वा सांजलिबंधं । )
आर्य आर्य! क्षम्यतामयमिदानीमविविवेक एको मे ।

आज्ञापयंतु मा वा मां तातपादास्तु सांप्रतम् ।
पराभवं कर्दंबेस्मिन् वाले वालेव किं सहे ॥ ५३ ॥

अस्माकं वालकर्दंबमप्युन्मूलयितुं प्रवृत्तः सेनाहस्तीति मुनिकुमारकोलाहल एवायं कथयति । तदेप गच्छाम्येपामुन्मूलनाय । (इत्युक्त्वा पर्णशालातो बहिर्निष्क्रम्य ।) अरेरे दुष्टा दुष्टाः ! कस्यायं दुर्ललितो दंतावलो वालनिर्विशेपं मे वालकर्दंबमुन्मूलयितुं करं प्रसारयति । ( इति वदन् खड्गमात्रसहायो निष्क्रांतः । )

नेपथ्ये– सेना केनेयमानीता सेनापतय उच्यताम् ।
वीरसेनेंद्रसेनारिमर्दना हे चमूचराः ॥ ५४ ॥
त्रयः प्रवयसो यूयमपि कालविदो न हि ।
अस्मिन् पुण्ये तपोरण्ये सेनायाः किं प्रयोजनम् ॥५५॥

तदतःपरं

न यथाश्रमवासिनां भवे-
दिह वाधाश्रमभूरुहामपि ।
करिभिर्हरिभिः पदातिभि-
स्त्वरया यात तथाश्रमाद्बहिः ॥ ५६ ॥

नेपथ्ये वीरसेनः– अयींद्रसेन ! अयि शत्रुमर्दन ! आश्रमदेशप्रविष्टां सेनां विलोक्य प्रकुपितो देवोश्वपतिरिति प्रतिभाति । तदमुया कदलीकाननवीथ्या निर्गच्छामः ।

नेपथ्ये इंद्रसेनारिमर्दनौ– अथ किम् ।

नेपथ्ये सेनापतयः–यथाज्ञादेवस्य । ( इत्युक्त्वा निष्क्रामंति । )

द्युमत्सेनः– ( साश्चर्यानंदं । ) अहो सेनापत्युपालंभवाक्यगर्भो योयमिदानीं श्रुतो ध्वनिः स खल्वगण्यगणनापात्रेभ्यो गणरात्रेभ्यः पूर्वं श्रवणातिथिः समभून्मे । यदि नानुमानं मे मृषा तर्हि धन्योयं दिवसः । अथवा कुतः पुण्यचरित्रैस्तैः सहापुण्यचरित्रस्य मे समागमः संभवेद्विषमायामस्यां दशायां ।

शैब्या– आर्यपुत्र ! किं युष्माकं प्रियमित्रस्याश्वपतेरेवायं ध्वनिरित्यनुमानं वः । अलब्धतद्दर्शनानंदलाभापि भवन्मुखादेवानेकवारं श्रुततत्पवित्रचरित्रा अस्मि तद्गुणेष्वभिज्ञाहं । किंच यदि स एव वः प्रियसखश्चेद्गच्छाम्यहमभ्यंतरपर्णशालाम् ।

द्युमत्सेनः– प्रिये ! यदि प्रियमित्रं मेश्वपतिरेव भविष्यति तर्हि किमर्थं देव्याभ्यंतरपर्णशालायां गंतव्यम् । स खल्वपर इवात्मा द्वितीयमिव हृदयं देहमात्रभिन्नः प्रियसखा मे । नायमितरजनसाधारणधिया वीक्षणीयः ।

शैब्या– नाथ ! भवन्मतमेवानुसरिष्यामि । परं सोयं कोलाहलो युष्मत्प्रियमित्रस्याश्वपतेरेव सेनायाश्चेद्वत्सः सत्यवान् न तां यथा परिभवेत्तथा केनचित्सह संदेशितव्यं।

द्युमत्सेनः– यद्येकवारं पुनः शृणोमि चेच्चं शब्दं तर्हि निश्चयं करोमि ।

नेपथ्ये– मुनयो मुनिबालका मुनि–
प्रमदाश्चाभयमस्तु वः सदा ।
वदत कः विराजते मही–
महितः शाल्वमहीमहेश्वरः ॥ ५७ ॥

द्युमत्सेनः– ( सानंदं । ) अहो स जलजधरध्वानगंभीरस्त-स्याश्वपतेरेवायं धीरः स्वर उपश्रूयते । अयि तपोधनाः ! युष्माकं मध्यात्कश्चित्त्वरितं गत्वा कथयिष्यति किं मत्संदेशं वत्सं सत्यवंतंप्रति ।

तपोधनाः– राजन् ! प्रवयसोपि वयं वीररसानभिज्ञतया सेनायां गंतुं न प्रभवामः । परमयं बालोपि देवव्रतो वत्सस्य सत्यवतः संगादभीरुस्वभावो गंतुमुत्सहते । तदेनंप्रति कथयतु भवान् स्वसंदेशं ।

द्युमत्सेनः– वत्स देवव्रत ! गच्छ गच्छ त्वरितं अभिधेहि च मत्संदेशं वत्सं सत्यवंतंप्रति ।

एषास्ति सेनाश्वपतेर्मन्मित्रैकशिरोमणेः ।
न तत्तस्याः परिभवः कार्यो वत्सेन कश्चन ॥ ५८ ॥
किंतु संमान्य तं स्नेहादभिवंद्य पुनः पुनः ।
संप्रार्थ्य च प्रार्थनयाऽश्रमपश्रममानय ॥ ५९ ॥

देवव्रतः– यथाज्ञा पितृपादानामेष गच्छामि । ( इत्युक्त्वा निष्क्रांतः । )

द्युमत्सेनः– देवि ! वयं माधवीमंडप एव तिष्ठामः । तत्रैव

प्रियमित्रस्याश्वपतेः समागमसुखमनुभविष्यामः ।

शैब्या– यथा रोचते देवाय ।

तपोधनाः– (परस्परं ।) वयमपि तत्रैव गत्वा तिष्ठामः ।

(इति सर्वे निष्क्रामंति ।)

(ततः प्रविशति निष्कोशासिहस्तः सत्यवान् ।)

सत्यवान्–(इतस्ततः परिक्रम्य सर्वतोवलोक्य च स्वगतं ।) सोयं बालकदंबः । अयं च सेनाहस्ती । नानेन किंचित्पराभूतमस्मिन् कदंबे ।

अकरिष्यमहं महाप्रहारं
मदमत्तेपि मतंगजे तदास्मिन् ।
अभविष्यदिहामुना कृतं चे-
त्किमपि प्रेयसि मे क्षतं कदंबे ॥ ६० ॥

श्रुतं च मया बहुभ्यो बहुश्रुतेभ्यो विनारणं न वारणो नरेंद्रेण हंतव्य इति । तदलं संरंभेण । (इत्युक्त्वा निष्कोशमसिं कोशशायिनं विधाय प्रचंडाभ्यां दोर्दंडाभ्यां शुंडादंडे गृहीत्वा तं पदशतमपसारयति ।)

(ततः प्रविशति द्युमत्सेनाश्रमं गच्छन्नश्वपतिः ।)

अश्वपतिः–(सत्यवंतं विलोक्य स्वगतं ।)

अहो कोवा वीरो रस इव वपुष्मान् स्वयमयं
ध्रुवं कश्चित्पृथ्वीपतिकुलकुमारोस्ति न परः ।
गृहित्वा शुंडायां यदभितनलोनेन करिणा
सह क्रीडास्वादं भजति हरिणारिप्रतिभटः ॥ ६१ ॥

( सुचिरंनिर्वर्ण्य । )

या चाकृती रुचिरचित्रपटे तु पूर्वं
संवीक्षिता नयनहर्षकरी मनोज्ञा ।
सैवेयमाकृतिरिहास्ति न शंसयो मे
सावित्रि पुत्रि तव भाग्यमसीममस्ति ॥ ६२ ॥

( प्रकाशं । ) अयि प्रियप्रधानौ ! सोयं वत्सः सत्यवान् यस्मिन् निबद्धबुद्धिर्वत्सा सावित्री जगत्त्रयमपि तृणाय मन्यते ।

प्रधानौ– एवमेव । स एवायं शूरशिरोमणेरार्यद्युमत्सेनस्य श्रीमत्तारारमणचूडामणिचरणपरिचर्यापरिणामो निखिलजगदभिरामो निजरूपसंपत्तर्जितकामो वत्सः सत्यवान् ।

अश्वपतिः– प्रधानौ ! क्षणमस्मिन् कदलीकानने निलीय वत्सस्य सत्यवतः पराक्रमं प्रेक्षामहे ।

प्रधानौ–यथाज्ञा देवस्य।(इत्युक्त्वा सर्वेपि निबिडतरकदलीतरुवृंदे निलीय पश्यंति ।)

( ततः प्रविशंत्याश्रमाद्बहिर्गतुं राज्ञाज्ञप्तास्त्रयोपि सेनापतयः । परिक्रम्यावलोक्य च । )

इंद्रसेनः– अहो कोयं वीरवर्यो विभातीह घने वने ।

शत्रुमर्दनः– रमतेस्मद्गजेनासौ सह प्रतिगजो यथा ॥६३॥

वीरसेनः– विना न राजबीजं तत्कर्तुं शक्यं हि केनचित् ।

इंद्रसेनः–योस्तु सोस्तु किमर्थं नः करिणं पीडयेदसौ ॥६४॥

त्रयोपि सेनापतयः– भद्रमुख भद्रमुख ! कोसि कस्यासि पुत्रः। किमर्थं च पीड्यते सेनागजोयं वत्सेन।

सत्यवान्– अस्म्यहं श्रीमहाराजद्युमत्सेनाभिधाङ्घ्रिपाम्।
तनयस्तातपादानां विनयौदार्यशालिनाम्॥ ६५॥
गजेनानेन तु महानाश्रमोपप्लवोधुना।
अकारि तदमुष्येयं दुर्दशात्र विधीयते॥ ६६॥

किंचातः परं भवतामपि तादृश्येव दुर्दशा भवित्री। यैरकस्मादागत्य निरर्थकमुद्वेजितास्तपोवननिवासव्यसनिनस्तपोधनाः।

इंद्रसेनः– एनं सनाथमपि किं किमनाथमेव
त्वं मन्यसे मनसि रे गजयूथनाथम्।
अस्माकमीदृशदशाकरणं त्वशक्यं
यस्माद्वयं त्वमिव वत्स धनुर्धराः स्मः॥ ६७॥
ततो विचार्य वक्तव्यमथवासि वनेचरः।
ततो विचाराभावेपि न भवानपराधवान्॥ ६८॥

सत्यवान्– ये ये मयि शत्रुतामाविष्कुर्वंति तान् सनाथानप्यनाथानेवाहं गणयामि। अमुष्य वारणस्य प्राणपरित्राणकारणं तु न विना रणं वारणो नरेंद्रेण हंतव्य इति राजधर्म एवास्ति न परः। परं यदि भवंत एव गजयूथनाथस्यास्य नाथताभिमानवंतस्तर्हि भवतामेवायं स्वङ्गः प्रथमं संभावनां करिष्यत्यनंतरं स गजः सनाथोस्त्वनाथोवेति स्फुटं भविष्यति।

इंद्रसेनः– भद्रमुख ! न वयं तस्य नाथाः। किंतु वयं स च श्रीमन्मद्रमहीमहेंद्रस्य महाराजाधिराजस्याश्वपतेः सेवकास्ततस्तेनैव सनाथाः स्मः। जानासि तं यस्मप्रबलबलभरपीडिता भगवती भूर्भूयोभूयः स्मरति महावराहावतारस्य यस्य गले समारोप्यंते समरांगणेषु स्वयंवरणमालाविजयलक्ष्म्या यस्य च वैरिवनिताहृदयकांतारेषु प्रज्वलत्यहर्निशमद्यापि प्रबलः प्रतापानलः।

सत्यवान्– भवतु। तेपि यदि समागमिष्यंति तर्हि तेषामपि चरणपरिचर्यां विधातुं न विस्मरिष्यत्ययं खड्गो मे। परं भवद्भिस्तु चारणैरिव स्वस्वामिगुणवर्णनेनैवोपजीव्यते किं।

त्रयः– (सदैव।) अहो अतिप्रगल्भतेयं। सकलवसुंधराविख्यातवीरयशसमस्मत्स्वामिनमपि तिरस्करोति तदलं क्षमया। हन्यतां हन्यतां हन्यतां। (इत्युक्त्वा सखड्गाः ससवंतमभिद्रवंति।)

सत्यवान्– आगच्छतागच्छत जाल्माः! एष युष्मत्प्राणपानव्यसनी सज्ज एवासिः। (इत्युक्त्वा निष्कोशमसिमादायाभिधावति।)

नेपथ्ये देवव्रतः–

न हंतव्या न हंतव्याः सत्यवन् सत्वरंस्त्वया।
एतेस्मत्पितृपादानां मित्रस्यास्य किंकराः॥ ६९॥

**सत्यवान्–** अहो पितृपादानां प्राणनिर्विशेषस्यार्यस्याश्वपतेरेवामी किंकराः । हंत हंतैतदविज्ञाय महदपराद्धं मया।
( इत्युक्त्वा खड्गं कोशे निक्षिपति । )

**अश्वपतिः–** ( सत्वरं प्रविश्य । )

> अलमलमलमस्मिन्मित्ररत्नस्य पुत्रः
> सकलगुणनिधानं सत्यवान् वीर एषः ।
> प्रणमत तममुं मे न्यस्तशस्त्रा हि सेना-
> पतय इह यतोऽयमेव सर्वस्वमस्ति ॥ ७० ॥

( इत्युक्त्वा सत्यवंतमालिंगति । )

**सेनापतयश्च–** ( न्यस्तशस्त्राः प्रणमंति । )

**सत्यवान्–** ( अश्वपतेश्चरणयोरग्रे स्वमसिं निधाय दंडवत्प्रणम्य च । ) आर्य आर्य ! मत्पितृपादैः प्रेषितोयं देवव्रतो विलंबेनागतस्तेनापराद्धं मया युष्मासु । लज्जे च तत एव युष्मत्तः पितृपादेभ्यश्च मुखमपि दर्शयितुं ।

**अश्वपतिः–** वत्स सत्यवन् ! स्वधर्मानुरूपाचरणे कैव लज्जा । सर्वेषां स्वस्वधर्मानुरूपाचरणमाभरणमेव न लज्जाकरं ।

**सत्यवान्–** उचितं खल्वप्रतिमदयालुतानिलयानां निःसीमसौम्यताशालिनां चवक्तुमेवं युष्माकं । परं मदीयान्मनःकाननान्नु नाद्यापि तद्विषयविषाददवानल उपशाम्यति ।

अश्वपतिः– वत्स ! नहि । नहि मयेदमुपचारवच उच्यते । सत्यमेतत्प्रसंगप्रेक्षणेनाधिकं प्रमोदमभजन्मानसं मे । एतद्विषये च मत्प्रधानावप्येतौ साक्षिणौ स्तः ।

प्रधानौ– भद्रमुख ! यथाह महाराजः । एभिरेव पूर्वमाज्ञप्ता वयमेतत्प्रसंगे वत्सस्य पराक्रमं निलीय प्रेक्षामहे इति ।

देवव्रतः– ( प्रविश्य सत्यवतः कर्णे एवं एवं । )

सत्यवान्– ( अश्वपतिंप्रति । ) आर्य ! तातपादा मे युष्मत्समागमामंदानंदायोत्कंठते तत्तत्रागत्याश्रमं नः कृतार्थयिष्यथेत्याशासते जनोयं ।

अश्वपतिः– वत्स ! यादृशी तत्रातचरणानामुत्कंठा मत्समागमे तादृश्येव जागर्ति ममोत्कंठा तेषां समागमे । ततो न मन्मनोपि विलंबं सहते । अयि शत्रुशल्यवीरमित्रौ ! युवामपि भवतं कृतार्थौ पवित्रचित्रचरित्रमन्मिनदर्शनेन । ( इत्युक्त्वा सर्वेपि निष्क्रामंति । )

॥ इति द्वितीयोंकः ॥

---

माहेश्वरात्मजनुपोर्द्धशशांकमौले-
र्दासस्य वर्यगुरुकेशवधर्मसूनोः ।
एषा कृतिर्मम जया शिवमित्रमौले–
र्गौरीगिरीशपदयोः कुसुमांजलिः स्तात् ॥ १ ॥

## ॥ अथ तृतीयोंकः ॥

(ततः प्रविशति प्रज्ञावान् ।)

प्रज्ञावान्– (सर्वतो विलोक्य।)
अहो कथमद्यापि नागतास्ते ब्राह्मणाः । मम तु देवव्रतमनु गच्छतो विलंबोभूत् परं तेष्वावधि क्व विलंबिता इति न प्रतिभाति ।

(ततः प्रविशंति सर्वे ब्राह्मणाः ।)

सर्वेपि (परस्परं ।) आगच्छतागच्छत । सुंदरं स्थलं विलोक्य तिष्ठत तिष्ठत ।

प्रज्ञावान्– (स्वगतं ।) एते तु सर्वे समागताः परं महाराजः कथमद्यापि न समागतः ।

ब्राह्मणाः– संगानुरूपा गुणसंपदिति लोकोक्तिर्न मृषा । वृद्धैरप्यस्माभिः सेनाभिमुखं गंतुं नोत्साहः कृतः । किंच देवव्रतो बालोपि महाराजस्याज्ञोत्तरक्षण एव सोत्साहं सेनाभिमुखं प्रस्थितः । सत्यवत्संगतिरेव तन्मूलं । कथमद्यापि तत्प्रवृत्त्युपलब्धये गतः प्रज्ञावान् न समागतः ।

प्रज्ञावान्– आर्याः ! अहं तु युष्मदागमनात्पूर्वमेवात्रागतोस्मि । परं भवतामागमने कुत इयान् विलंबो जातः ।

ब्राह्मणाः– अस्माकमप्यत्र सत्वरमागंतुमिच्छासीत् परं महाराजस्य महाराजधर्मपत्न्याश्च मंदतरागतिरेव विलंब-

कारणमभूद्विविडतरकदलीवनवीथिसमुल्लंघनपर्यंतं । विशालां चंपकवनवीथीं तु समासाद्य हरिणप्लुतेनैनं माधवीमंडपं सत्वरं प्राप्ताः स्मः ।

प्रज्ञावान्— वृद्धावंधौ च राजदंपती परित्यज्य सत्वरतरमागमनेन किं फलं भोक्तव्यमासीद्वः ।

ब्राह्मणाः— अत्राग्रत आगत्य रम्यस्थलावस्थानमेव सत्वरतरागमनफलं नः । परं त्वया तत्र गत्वा देवव्रतस्य या प्रवृत्तिरुपलब्धा तां वद ।

प्रज्ञावान्— नाहं यूयमिव महाराजं विना वृथावाग्विनोदेन कालमतिवाहयितुमीहे । किंतु गमिष्यामि महाराजमानेतुम् । ( इत्युक्त्वोत्थातुमिच्छति । )

( ततः प्रविशति महाराजो द्युमत्सेनः शैब्या च । )

द्युमत्सेनः— देवि । एष ईषद्विकचमाधवीमुकुलमधुरगंधवाही गंधवाहः सुखदस्पर्शा अतिकोमलाः परितो विकीर्णाश्चेमा वालुका एतेस्मभ्यं पुष्पांजलिमिवार्पयद्भ्यस्तरुवरेभ्यो विरतं परितः पतंतः पुष्पप्रकराश्च निवेदयंति प्राप्तं माधवीमंडपं नः ।

शैब्या— प्राणनाथ । अवितथमेतत् ।

गुंजंति कुंजतरुपुंजगता द्विरेफाः
कूजंति कोकिलकुलानि कलानि चात्र ।
कर्णातिथित्वमुपयांति च केकिकेका-
स्तन्मंडपं तमविशंकमुपागताः स्मः ॥ १ ॥

**ऋषयः**– राजर्षे ! स्वागतं ते ।

**द्युमत्सेनः**– आर्याः ! प्रणमामि युष्मान् ।

**ऋषयः**– दीर्घायुर्भूयाः ।

**शैब्या**– आर्याः ! अभिवंदे ।

**ऋषयः**– देवि ! अखंडसौभाग्यसंपद्भव ।

**प्रज्ञावान्**– राजर्षे ! युष्माकमत्रागमनविलंबेनैतदवधि चिं-ताकुलमभून्मे चेतस्तदिष्ट्या यदागता अत्र यूयमिति ।

**द्युमत्सेनः**– कोसौ । प्रज्ञावान् किम् । आगच्छागच्छ । वत्स प्रज्ञावन् ! किं वत्सेन देवव्रतेन वत्साय सत्यवते मत्संदे-शो निवेदितः । कथय तत्रत्यां प्रवृत्तिम् ।

**प्रज्ञावान्**– आर्य ! युष्मदाज्ञोत्तरक्षण एव पालाशं दंडं स्कंधे निधाय सोत्सवं निर्गतः प्रियमित्रं मे देवव्रतः । अहं च तत्कौतुकालोकनायानुधावन् निर्गतः ।

**ब्राह्मणाः**– ( परस्परं । ) कथमिदानीं विस्तीर्णा विस्तीर्णाः कथाः कथयितुं प्रवृत्तः । पूर्वमस्माभिः सादरं पृष्टोपि नाब्रवीत् ।

**प्रज्ञावान्**–यावदस्मद्दालकदंवालवालं गतावावां तावत्प्रचं-डाभ्यां दोर्दंडाभ्यां शुंडादंडे गृहीत्वा सेनागजमप्रयासले-शमपसारयंतं प्रियमित्रं नौ सत्यवंतमपश्याव ।

**द्युमत्सेनः**– नैतदुचितं कृतं वत्सेन सत्यवता ।

**शैब्या**– अश्वपतिरप्येतन्महापमानं गणयिष्यति ।

**द्युमत्सेनः**– ततस्ततः ।

**प्रज्ञावान्**– एवमपसारयन् सेनागजं यावद्गतो विशालायां वनवीथ्यां सत्यवांस्तावत् देवव्रतोपि युष्मत्संदेशं वक्तुं गतः। अहं चात्रागतः।

**द्युमत्सेनः**– सम्यक् तर्हि। श्रुतमत्संदेशः सत्वरमेव वत्सः सत्यवान् प्रणामसहस्रैः क्षमाप्यास्यापराधं महाराजमश्वपतिं मानपूर्वमत्रानयिष्यत्येव।

( ततः प्रविशति सत्यवान्। )

**सत्यवान्**– आर्य! महाराजोऽश्वपतिरस्मदाश्रमद्वारमलंकरोति वांछति च युष्मत्समागमसुखमनुभवितुं निजप्रधानाभ्यां सहैव।

**द्युमत्सेनः**– वत्स सत्यवन्! गच्छ त्वरितं गच्छ। समानयात्र भूतलभूषणं मित्ररत्नं मे।

**सत्यवान्**– यथाज्ञा तातपादानां। (इत्युक्त्वा बहिर्निष्क्रम्य सहाश्वपतिना प्रधानाभ्यां च पुनः प्रविशति।)

**अश्वपतिः**– ( द्युमत्सेनमाश्लिष्य प्रणम्योपविश्य च सगद्गदकंठं। ) आर्य राजर्षे! कृतार्थोऽहं बहुकाललब्धेन भवद्दर्शनेन।

**द्युमत्सेनः**– परस्परमेतत्समानं।

**अश्वपतिः**– ( शैव्यां विलोक्य। ) देवि! अश्वपतिरहं प्रणमामि।

**शैव्या**– प्रतिदिनं प्रवर्द्धतां प्रतापानलो वत्सस्य।

**प्रधानौ**– जयतु जयतु देवो द्युमत्सेनो देवी शैव्या च।

( इत्युक्त्वा प्रणमतः । )

द्युमत्सेनः– कावेतौ ।

अश्वपतिः– एतौ तु शत्रुशल्यवीरमित्रौ नः प्रधानौ ।

ब्राह्मणाः– ( परस्परं । ) काप्यपूर्वैव धन्यताश्वपतेर्विवेकसहितानां सूक्तीनां प्रतिभाति ।

द्युमत्सेनः– प्रियमित्र अश्वपते ! ( इत्यर्द्धोक्ते । )

अश्वपतिः– आर्य आर्य ! असमंजसमसमंजसमेतत् ।

द्युमत्सेनः– अस्तु नाम । मद्वक्तव्यं तु पश्चाद्वक्ष्यामि । प्रथमं तु किमसमंजसमिति भवद्भ्य एवेदानीं श्रोतुमिच्छामि ।

अश्वपतिः– आर्य ! वत्सपदमात्रपात्रेप्यस्मिन् जने प्रियमित्रेति विशेषणं भवदुक्तं युक्तं किम् ।

द्युमत्सेनः– ( किंचित्प्रहस्य । ) प्रियसखे ! किं मित्रतासंबंधोवस्थासाम्यमपेक्षते ।

नहि नहि नहि मित्र मित्रतेयं
गुणगणवंशवयांसि पश्यतीह ।
किमपि भवति यच्च तन्निदानं
तदविषयं मनसो धियश्च वाचाम् ॥ २ ॥

न गुणसाम्यं न संपत्साम्यं न विद्यासाम्यं न वंशसाम्यं न वयःसाम्यं वा मित्रता संबंधबंधननिदानतामधिगच्छति । वस्तुतः सूक्ष्मया दृशा विलोक्यमाने केवलं मनःसाम्यमेव मित्रताकल्पवल्लरीमूलमिति निश्चीयते । वहवो

गुणिनो गुणज्ञाश्च राजानः प्रवयस्कैर्गुणिभिः सहैव वद्धमैत्रीसंबंधा अनेकेष्वितिहासेषु श्रुताः श्रूयंते च। प्रवयसोप्यल्पवयस्कैर्गुणिभिः सह निःसीमस्नेहसंबंधवद्धा दृष्टा दृश्यंते च। ततो मया दत्तं प्रियमित्रेति विशेषणं न किंचिदप्ययुक्तम्।

अश्वपतिः— अस्मिन् समय एतद्विषयविवादेन युष्मद्वचनामृतपाने विघ्नमाविष्कर्तुं नेच्छामि। तद्वक्तव्यमेव श्रावयितुमनुग्रहं करिष्यथेत्याशासे।

द्युमत्सेनः— वक्तव्यं त्वेतदेव यदियं सेना भवतामस्तीति ज्ञानाभावाद्वत्सेन सत्यवता यो विहितः सेनापरिभवस्तच्छ्रवणजन्यलज्जाकल्लोलिनीकल्लोलेषु मज्जते स्वमनसे न किंचिदवलंबनं दातुं शक्नोत्ययं जनः। इदानीं ज्ञात्वापि समुचिताभ्युत्थानाभिप्रयाणादिसंस्कारं कर्तुं वृद्धत्वप्राप्तमस्वास्थ्यमांध्यं च विघ्नमाविष्कुरुतः।

शैव्या— पदभ्रष्टता चेयमस्माकमिदानीं भवादृशालभ्यपरमातिथिलाभेपि समुचितसत्काराकरणकारणतयाऽनल्पविषादविषवर्षिणी भवति।

अश्वपतिः— आर्य राजर्षे! आर्ये देवि! वत्सेन सत्यवता मत्सेनायां यद्विहितं तत्तन्मे संतोषकरमसंतोषकरं वेयेतद्विषयविचारस्तु मत्स्वांताधीनतामेव धारयति न तस्मात्तद्विषये चिंता विधेया। वृद्धत्वकृतमस्वास्थ्यमांध्यं च युवयोर्वंद्यतां पूज्यतां मान्यतां च निवेदयति ततस्त्रा-

पि न विषादावसरः । पदभ्रष्टता चेयं मामेव त्रपापगापूरे विषादविषाब्धौ च मज्जयति यदहं सज्जायामेव मे सेनायां पूर्णेष्वेव मे कोशेषु प्रबलायां च मे मित्रसंपदि पश्यामीदृग्दशाविवशान् युष्मान् ।

वीरमित्रः— सत्यं । यस्मिन् समये श्रुता पदभ्रष्टता युष्माकं महाराजेन ततः प्रभृति तद्विचारावेशविवशस्तत एव महाराजः ।

अश्वपतिः— आर्य राजर्षे !

मन्य एतावतैवाहमात्मनोर्मंदभाग्यताम् ।
यन्मन्मित्राणि मत्संपत्स्वनात्मीयमतीनि हा ॥ ३ ॥
मित्राणि यदि मित्राणां नापत्सहचराणि चेत् ।
कलत्रैरिव मित्रैः किं संपन्मात्रसहायिभिः ॥ ४ ॥

किंचाद्यावधि तूष्णीं स्थित्वातिदुःसहमिदं दुःखमनुभवद्भिर्भवद्भिरेव नायंजनोऽनात्मीयगणनायां गणितः किम् । किंबहुना ।

युष्मत्पदभ्रष्टतया खिन्नं मे मानसं पुनः ।
खेदयत्यतुलं युष्मत्कृतामत्स्वपरस्वधीः ॥ ५ ॥

द्युमत्सेनः— प्रियमित्राश्वपते ! आर्य शत्रुशल्य ! मित्र वीरमित्र ! स्वल्पैरेवाक्षरैरिदानीं किमपि वक्तुमिच्छामि तत्र च क्षणं दत्तावधाना यूयं भविष्यथेत्याशासे । मित्राणि मे ! मित्रशब्दोयमक्षरद्वयमात्रघटितोपि किम-

प्यसीमानुपमं चार्थगांभीर्यं समुद्वहति। तथाहि । न मातृरसः पितरि न पितृरसो मातरि न ज्येष्ठसोदररसः कनिष्ठसोदरे न कनिष्ठसोदररसो ज्येष्ठसोदरे च दरीदृश्यते । धर्मांगनारसश्च कोप्यन्यादृश एव । एवमेकस्मिन् गतो रसोन्यत्र दुर्लभ इति निर्विवादं । परं पवित्रं मित्रं तु कदाचिन्मातृवात्सल्यमनुकरोति । कदाचित्पितेव हितान्युपदिशति । कदाचिज्ज्येष्ठसोदर इवापद्बंधुतां दर्शयति । कदाचित्कनिष्ठसोदर इवाज्ञावशंवदतां भजति । कदाचिच्च धर्मांगनेव दुराग्रहग्रहग्रस्तहृदयं च स्वमित्रं वीक्ष्य तस्मै प्रियं हितं चोपदिशति । त्रिविधोह्युपदेशः श्रूयते शास्त्रेषु राजोपदेशो बांधवोपदेशः कांतोपदेशश्चेति । तत्र तावत्

राजोपदेश इव वेदवचश्च योयं
मान्यश्च वंद्य इह भूवलयेखिलेस्मिन् ।
आज्ञा सुहृज्जनकृतेव पुराणवाणी
रम्येतिहासवचसां रचना च पाल्या ॥ ६ ॥

कांतोक्तसूक्तिरिव काव्यकथापथाप्ता
पथ्योपदेशततिरप्रतिमातिमात्रम् ।
कं कं जनं न मधुरैर्मृदुलैर्मनोज्ञैः
श्रेयःप्रियैर्हितमयैः सुखयत्यनर्घ्या ॥ ७ ॥
उपदिशंति यदेव पदे पदे

सुनिगमांगमभारतसूक्तयः ।
इह तदेव च काव्यकथोक्तयः
प्रतिपदं प्रतिशब्दमहो हितम् ॥ ८ ॥

परं काप्यन्यैव काव्यकथासूक्तीनां विविधरससांद्रा पीयूषप्रतिस्पर्द्धिनी मधुरता या वशयति सकृदपि श्रवणमुपगता विदुषामपि चेतांसि । अतएव काव्योपदेशः कांतोपदेशनिर्विशेषः परिगण्यते निपुणैः । यद्यपि कांतोपदेशो नान्येन केनापि कर्तुं शक्यते तथापि सन्मित्रं तु सति समये तादृशमप्युपदेशं कर्तुं न प्रमाद्यति । सन्मित्रं च यादृशमुपदेशं करोति तादृशोपदेशकारिणी कुलीना कांता तु क्वचित्कदाचिदेव पुण्येन लभ्यते । प्राचीनैश्च प्रज्ञावद्भिर्निबद्धा ये ये नियमास्ते ते मान्यतमा एव । परं पुण्यचरित्राः पवित्राशयास्ते यदि कांतोपदेशस्थाने मित्रोपदेशमित्यवदिष्यंश्चेत्साधीयस्तममभविष्यत् । एतावतैव सिद्धमेव यन्मातृगतः पितृगतो भ्रातृगतः कलत्रगतः पुत्रगतश्च रसः पवित्रचरित्रे सन्मित्रेनुभवितुं शक्यते । परं न पवित्रसन्मित्रगतो रसो मातरि पितरि भ्रातरि पुत्रे कलत्रे वानुभूयते । न मातृभिर्नपितृभिर्नभ्रातृभिर्नकलत्रैर्नपुत्रैर्वा सन्मित्रकृत्यं कर्तुं शक्यते । भवंति कतिपये तादृशा अपि विचारा न ये दयामृतमयाशयानां मातृचरणानामग्रे प्रकाशयितुं शक्यंते । संति कतिपये तादृशा अपि विचारा न ये परमकृपापूर्णा-

न्तःकरणानां पितृपादानामप्यग्रे प्रकाशयितुं शक्यंते। सन्-
ति तादृशा अपि केचन विचारा न ये प्रेमपीयूषपूर्णा-
न्तःकरणानां सोदराणामपि समीपे प्रकाशयितुं शक्यंते।
विलसंति तादृशा अपि केचिद्विचारा न ये पतिव्रतानया-
याः स्वीयप्राणप्रियायाः सकाशेऽपि प्रकाशयितुं शक्यंते।
परं तादृशः कोऽपि जगति जागर्ति विचारो यस्य यथार्थ-
निरूपं पवित्राणां मन्मित्राणां निर्मलेषु हृदयादर्शेषु सम-
र्पयितुं क्षणमप्यस्मन्मनः शंकातंकाकुलतामनुभवेत्। किं-
बहुना। मन्मते मन्मित्रं हि मूर्तिमज्जंगमं हृदय-
मिति मन्येऽहं। अस्मिन् किल्मिषागारे संसारे समुत्तीर्णानाम-
ज्ञानां किं हितं किमहितं किं कृत्यं किमकृत्यं किं गम्यं
किमगम्यं किं भूषणं किं दूषणं किं हेयं किमुपादेयं सर्वमि-
ज्ञानचिंतामणेः कथं मातृषु कथं पितृषु कथमग्रजादिषु
कथमनुजादिषु कथं सुहृत्सु कथं संबंधिषु च
वर्तितव्यमिति विवेचयिता गुरुः महापुण्यराशिभि-

वेश्म विश्वासस्य पात्रं प्रीतिरसस्य आरामोऽभिन्नहृदयताकल्पलतायाः समभागभाक्च सुखदुखयोः सन्मित्रमंतरा कोप्यन्यो भवितुमर्हति किं । नैवेति निर्विवादं । एवं निःसीमानुपमं च मित्रेत्यक्षरद्वयस्यार्थगांभीर्यं जगत्प्रसिद्धमेव । यद्यपि विरलानि किल मित्रशब्दवाच्यानि मित्राणि तथाप्यगण्यपुण्यशालिनां सद्भाग्यवशाद्भवंति तादृशानि पवित्रचरित्राणि सन्मित्राणि । तथाहि । तादृङ्मित्रसंपदैव प्राचीना राजानोऽलभंत प्राज्यानि राज्यानि । तादृशमित्रसंपदैव महात्मानो महात्मतामध्यगच्छन् । तादृशमित्रसंपदैव ऋतुध्वजोनाम राजकुमार उपरतामपि स्वां प्रियतमां मदालसां पुनरुपलब्धवान् । वीरधीरगंभीरनरापीडेनापि चंद्रापीडेन तादृशमित्रविरहदुःखासहिष्णुतयैव प्रेयांसोपि परित्यक्ताः स्वीयाः प्राणा इति केषामविदितं । किंच

पशुधनमधनं धनमर्धधनं धनं तु धान्यं बुधैः कथितम् ।
अतिधनमेतत्त्रितयं विद्या भूः शोभनं मित्रम् ॥ ९ ॥

इत्युक्तवद्भिः पुरातनैः प्रज्ञावद्भिरपि सन्मित्रमतिधनगणनायामेव गणितं । ततएव येन परमदयालुना परमेश्वरेण महाराजाश्वपतिरूपं मित्ररत्नं समर्पितमस्ति मह्यं तस्योपकारभारो यावज्जीवमविस्मर्य एवेतिमन्येहं । सत्यप्येवं यदि महाराजाश्वपतिसंपरस्नात्मीयधीर्भवेयं चे-

स्कोवामदन्यो मूर्धमंडलमौलिमंडनं स्यात् । यच्च मया पद-भ्रष्टताप्राह्यवसरे न महाराजाय प्रेषिता प्रवृत्तिस्तत्रोपालंभमर्हति वनवासानुभवार्पणपटीयः प्रारब्धमेव मदीयं नान्यत् ।

शैव्या— वत्स ! भूयोभूयः प्रेष्यतां पदभ्रष्टताप्रवृत्तिः स्वमित्रायेति प्रार्थितोप्यार्यपुत्र इदमेव प्रोवाच ।

वासः पुण्येष्वरण्येषु संगः सार्द्धं च साधुभिः ।
वन्यधान्यफलाहारः प्रियात्प्रियतरः प्रिये ॥ १० ॥

किंच । यावद्भोग्या विपिनवसतिस्तावदाप्तैर्नमित्रै-
र्जेतुंशक्यो रिपुरतिबलैरित्यहं वेद्म्यशंकम् ।
भोग्ये भुक्ते स्वयमपिरिपुर्मित्रतामत्रगंता
व्यर्थं दुःखैः प्रणयिसुहृदो योजयेयं किमर्थम् ॥११॥

तस्मादस्माकमधुना दुःखेऽदुःखधियां प्रिये ।
उचितं पार्वतीप्राणप्रियपादाब्जपूजनम् ॥ १२ ॥

अश्वपतिः— देवि ! स्वोचितमाचरता तेन महात्मना मदुचिताचरणे विघ्नमाविष्कृतं ।

शत्रुशल्यः—यद्यद्यथा यथा भवितव्यं तत्तत्तथा तथैव भवति । तद्व्यतीतविषयविषादं दूरीकृत्य वर्तमानकालीनकर्तव्य एव दीयतामवधानं ।

ब्राह्मणाः— वृद्धतरेणामुना प्रधानेन सम्यगुक्तं । महाराजाश्वपतिद्युमत्सेनयोः प्रेमरससांद्रसूक्तिप्रत्युक्तिश्रवणानंद-

विवशस्वांततया नास्माभिः समुपस्थितोप्यवगतो मध्यान्हसमयः। तदिदानींतनकर्तव्य एव दत्तावधाना भवामः। (इत्युक्त्वा निष्क्रामंति।)

सत्यवान्– आर्य! अहमपि पुष्पावचयाय गच्छामि। (इत्युक्त्वा निष्क्रामति।)

द्युमत्सेनः– प्रियमित्र अश्वपते! न प्रयोजननिरपेक्षाः प्रेक्षावत्प्रवृत्तय इति पृच्छामि। एतावद्वसुमतीचक्रचंक्रमणनिदानं किंस्विन्मृगया दिग्विजयस्तीर्थयात्रा वा।

अश्वपतिः– राजर्षे! मृगयादिग्विजयतीर्थयात्राभ्यो भिन्नं किमप्यन्यदेव मच्चंक्रमणनिदानं।

द्युमत्सेनः– अस्तु यत्किमपि। परमतःपरं क्व कियच्च गंतुमिच्छा वः।

अश्वपतिः– युष्मदीयः पुण्याश्रम एवायं परमा सीमा मत्प्रयाणेच्छायाः।

द्युमत्सेनः– वचनरचनयानया नयाब्धे
भवति सखे मम कोपि यः प्रमोदः।
प्रभवति नहि तं तु वक्तुमेषा
प्रणयनिधे रसना मनागपीह॥ १२॥

विपद्विवशमादृशस्वमित्रसंभावनाकरणमाभरणं भवादृशामप्यमित्राणां।

वीरमित्रः– राजर्षे! न केवलं भवतां संभावनार्थे महाराजस्यात्रागमनं। किं तु किमपि युष्मत्सकाशाद्याचितुमपि।

द्युमत्सेनः– (सहर्षं।) अयि वीरमित्र! यथेदं श्रूयतां।

तप्तं मयाद्यदिवसावधि यच्च जप्तं
स्वाराधितं च गिरिजारमणांघ्रिपद्मम्।
राज्यस्थितेन च मया यदकारि पुण्यं
सर्वं तदस्तु सुहृदो मम कामवर्षि॥ १४॥

परं कीदृशस्तन्मनोभिलाप इति ज्ञातुमातुरतरं मे स्वांतं। तद्यदि सहजलज्जावनम्रो महाराजो नो न वक्तुं प्रभवेत्तर्हि भवानेव तदभिज्ञं मां करिष्यतीत्याशासे।

अश्वपतिः– (सहर्षमुत्थाय।) आर्य राजर्षे! क्षणार्धमप्यविश्रांतभ्रमणवेगेऽस्मिन् संसारचक्रे प्राक्तनात्मीयकर्मचक्रचंक्रमणक्रमेण विचित्राचिंत्यरुचेर्भगवतो विरंचेश्चापारव्यापारपारवश्यात्प्राणिनः केचित् केषांचित् पितरः केचित्केषांचित्पितृव्याः केचित्केषांचिद्भ्रातरः केचित्केषांचिद्भ्रातृजाः केचित्केषांचिन्मातुलाः केचित्केषांचिद्भागिनेयाः केचित्केषांचित्सुहृदः केचित्केषांचित्संबंधिनः केचित्केषांचिद्बंधवः केचित्केषांचिद्बांधवाः केचित्केषांचिद्गुरवः केचित्केषांचिच्छिष्याश्चैवमनेकविधपरस्परसंबंधदृढबंधनसंबद्धा दरीदृश्यंते। किंच केनाप्यनिर्वचनीयेन पूर्वजन्मसंबंधेन केचनैहिकसंबंधबंधनशून्या अपि मिथः सोदरनिर्विशेषं स्निह्यंतो दृश्यंते। केचन महात्मानोपकारपरेष्वप्युपकारपरायणांतःकरणाः

प्रेक्ष्यंते। केचन केषुचित्पितृनिर्विशेषभक्तया विलोक्यंते। केचित्सत्स्वप्यौरसेषु पुत्रेषु केषुचित्पुत्रनिर्विशेषवात्सल्यवंतो वर्तंते। जन्मतः पवित्रचरित्राश्च केचन पुण्यपूर्णाशया मातृपक्षपितृपक्षसंबंधलेशशून्यास्वपि सौशील्यामूल्यालंकारवतीषु कासुचित्सतीषु जननीष्विव सोदरास्विव च भक्तिभरधारिणोनुभूयंते। एवं पूर्वजनुःसंबंधो न ज्ञातिं न जातिं न नीचकुलं नाप्युच्चकुलं न मानं नापमानं न शौर्यं न धैर्यं न सुशीलं न कुशीलं न सारल्यं नासारल्यं च विलोकयति। केवलमयस्कांतमणिशलाकेव लोहमयीं मत्सीं कोपि पूर्वजन्मसंबंध आकर्षति मनुष्याणां मनोवृत्तिं। तथैव केनापि बहुभ्यो वर्षेभ्योर्वागेकस्मिन् राजसूये जनस्यास्य मनोवृत्तिर्दर्शनात्प्रभृति पूर्वजनुःसंबंधेन युष्मासु प्रणयरशनानिबद्धास्ति। इतरथा क्व मदीयो मद्रो नाम देशः क्व च युष्मदीयः शाल्वो नाम देशः परः। सहस्रेष्वपि मिलितेषु सत्सु राजन्येषु युष्मास्वेव प्रेमरसनिबद्धा बुद्धिरेव मे निवेदयत्यावयोः कमपि पूर्वजन्मसंबंधं। (तादृशं च संबंधं तारामैत्रं चक्षूरागं च प्रावोचन् प्राचीनाः। चक्षूरागश्च नाल्पपुण्यशालिभिर्लभ्यते इति निर्विवादं।) परमकृपालोः परमेश्वरस्य कृपया जाग्रत्यपि पूर्वजन्मसंबंधे तादृशे निष्प्रतिमे किमप्यैहिकमप्यभिनवं संबंधं बहुमभिकांक्षते स्वांतं मे। स च संबंधः कीदृशो विधेय इत्येतद्विषये

आर्यः शत्रुशल्य एव युष्मान् विज्ञापयिष्यति । (इत्युक्त्वोपविशति ।)

शत्रुशल्यः– (उत्थाय ।) आर्य राजर्षे ! महाराजोयमश्वपतिर्व्यतीतेष्वर्द्धे वयसि नापत्यमुखदर्शनसुखमन्वभवत् । अपत्यमुखमाप्तये च वेदोक्ताः शास्त्रोक्ताश्च सहस्रशः प्रारब्धाः सदुपायाः परं न केपि तन्मनोभिलाषपूर्तिप्रणयिनः प्राभवन् । एवं निष्फलेषु तेषूपायेषु त्रिजगत्सवित्रीं भगवतीं सावित्रीं परया सपर्यया समुपाचरत् । दयामृतमयाशया च सा भगवती परितुष्टा साक्षाद्दत्तदर्शना च वत्साभ्यधत्त ! अनयार्यद्युपासनया परितुष्टाहं तद्ब्रवीमि भविष्यति ते सद्गुणगणधन्यैका कन्येत्युक्त्वा तिरोभूता ।

द्युमत्सेनः– अवगत इदानीं मया महाराजस्याभिलाषः स खलु पुत्रमुखदर्शनसुखमभिलषतीति । तदहमिदानीं

–तमाशुतोषं संतोष्य तपोभिः पार्वतीपतिम् ।
तुष्टात्तस्माच्च याचिष्ये मित्रे पुत्रशतं सखे ॥ २९ ॥

शत्रुशल्यः– आर्य राजर्षे ! न चित्रं तद्भक्तिभरवशीकृतपरमेश्वरचित्तेषु भवादृशेषु । परमिदानीं महाराजस्य न पुत्रार्थमत्रागमनं । अस्ति किमप्यन्यदागमनप्रयोजनं ।

द्युमत्सेनः– तदपि श्रोतुमवहितोस्मि ।

शत्रुशल्यः– श्री सावित्रीप्रसादात्प्राप्तायां श्री सावित्री-

वचनादेव च विदितसावित्रीति पवित्रनामधेयायां व-त्सायां महाराजकुमार्यां ये ये स्वयं विकसंति स्वाभा-विकाः सद्गुणा न तान् वर्णयितुं शक्ता मे प्रज्ञा रसज्ञा च । महाराजप्रयत्नाच्च विद्यापि कापि निरवद्यातिहृद्या च सद्य एव समासादितास्ति तया । किं बहुना ।

न सा कला न सा विद्या न चौज्ज्वला चातुरी च सा ।
प्रावीण्यं यत्र नागण्यमावीण्या प्राप सा परम् ॥ १९ ॥

नैतावदेव । परिणतमृद्वीका माधुरीधुरीणां कवितां कर्तुं च जागर्ति काचित्तस्याः प्रतिमेति प्रतिभाति मे । यतस्तया रचितानि चंपूनाटककाव्यकथाकथानकानि विलोक्यैव सत्कविशिरोमणयोपि गलितगर्वा बभूवुर्भवंति च। स्वरूपसंपच्च काप्यनिर्वचनीयैव वरीवर्ति तस्याः ।

द्युमत्सेनः– शोभते सर्वमेतदसंशयं महाराजपुत्र्यां विशे-षतः सावित्रीप्रसादप्राप्तायां ततो न किंचिच्चित्रमिव मन्ये । ततस्ततः ।

शत्रुशल्यः– ततश्चैकदा विद्यालयात्समागतां प्रणायप्रण-तां पाणिग्रहणार्हवयोवस्थां च तां विलोक्य प्राब्रवीन्म-हाराजोश्वपतिः । वत्से ! इदानीमधीताध्येतव्या ज्ञात-ज्ञातव्या च संवृत्तासि तत्स्वानुरूपवरमन्वेष्टुं भूचक्रचं-क्रमणं विधेहीति ।

द्युमत्सेनः— युक्तमुक्तं महाराजेन । ततस्ततः ।

शत्रुशल्यः— ततो यथाज्ञा तातपादानामित्युक्त्वा प्रस्थिता वसुंधरावलयपर्यटनं कर्तुं सा । अहं वीरमित्रश्च सहगंतुमाज्ञप्तौ महाराजेन तया सह सकलभूमंडलपरिभ्रमणमन्वभवाव । वीक्षिताः पूर्वपश्चिमदक्षिणदिक्स्थाः सर्वे पृथ्वीपतिकुमाराः परं न तेषां मध्यात्कोपि राजकुमारस्तन्मनोविश्रामारामतामनुबभूव ।

द्युमत्सेनः— अतर्क्यकारणसंबंधो हि प्रेमबंधस्ततस्ततः ।

शत्रुशल्यः— ततश्चोत्तरदिश्यपि बहून् पुरपत्तनपुटभेदनपुरुहूतकुमारान् विलोक्यापि तेषु तेषु स्वांतपरितोषमलभमाना सा नानानगनगरचक्रचंक्रमणक्रमेण यावत्प्राप्ता वत्सैनामाश्रमपरिसरभूमिं तावन्माधवीमंडपमध्ये वत्सः सत्यवान् वत्सायाः सावित्र्या नयनयोरतिथिरभवत् । दृष्टमात्र एव तस्मिन् पुण्यचरित्रे चंद्रकांतमणिशालभंजिकेव चंद्रमसि तस्यामनोवृत्तिरविरलरससांद्रा संवभूव । ततः प्रभृति च सा तमेव स्वानुरूपं मन्यमाना वत्सस्य सत्यवतो धर्मपत्नी भवितुमभिकांक्षति ।

*तामिच्छामिह संपूर्णां विधातुमवनीश्वरः ।*
*अयमश्वपतिः प्राप्त एतामाश्रमभूमिकाम् ॥ १७ ॥*

वत्सायाश्चैव सावित्र्याः पवित्राभीष्टपूरणे ।
युष्माकं संमतिं राजा संप्रार्थयितुमिच्छति ॥ १८ ॥

येन पूर्वजनुर्बद्धसंबंधेपि द्रढीयसि ।
ऐहिकोपि नवीनः स्यात्संबंधः स्वांतसौख्यदः ॥१४॥

( इत्युक्त्वोपविशति । )

द्युमत्सेनः– प्रियमित्र अश्वपते ! प्रवीण शत्रुशल्य ! पवित्र वीरमित्र ! अस्मिन् विषये सावित्र्या बलवती बालबुद्धिरिति मे प्रतिभाति । वत्सायाः सावित्र्याः स्वयंवरस्तु केनचित्कुलवता शीलवता गुणवता विद्यावता निःसीमसंपद्वता च राजकुमारेण सह कारयितुमर्हः । सत्यवान् यद्यपि विद्याविनयविवेकवयःस्वरूपाद्यैः सद्गुणैः सावित्र्या अनुरूप इति वक्तुं शक्यते तथापि सद्गुणगणतिरस्कारणी पदभ्रष्टतैवेयमनर्हतालतामूलत्वमवलंबते।

शैव्या– आर्यपुत्रमतमनुसरति ममापि मतिः । नाहं वत्सां सावित्रीं सत्यवत्संबंधेनैतद्वनवासव्यसनमनुभावयितुमिच्छामि ।

द्युमत्सेनः– प्रियमित्राणि मे ! अतर्कितापदापातविलासोयं वनवासः । प्रशांतानेकमुनिजनाश्रितस्वच्छायातरुततिघनेऽतिपावनेपि वनेस्मिन् कदा कदा कुत्र कुत्र कानि कानि दुःखान्यापतंतीति न वक्तुं शक्नोस्मि । असंख्यत्रानेके दर्शनादपि त्रासप्रदाः श्वापदाः । कदाचिदत्र क्रीडंति क्रूराकृतयः क्रव्यादाः । कदाचिदेतद्दीप्तदावानलज्वालामालाभिर्विधीयते व्याकुलं । कदाचिद्घनद्रुरोच्छलल्लो-

लकल्लोलाभिर्महापूरोत्पाटितकूलाभिः कल्लोलिनीभिर्महासंशयग्राह्याशयालुतामुपनीयते । तद्विचार्यं चेतसा किंतादृशानेकविधा विपदो विलोकयितुमर्हति स्वप्नेपि वत्सा सावित्री ।

शैब्या— निसर्गसिद्धविरुद्धधर्मो हि पत्तनवासिनां वनवासिनां चोपचाराचारविहाराहारक्रमस्तथा हि । क कस्तूरिकाकालागरुकर्पूरकाश्मीरजरसांगरागपात्रं दुगाव्या वत्सायाः सावित्र्या गात्रं क च वनेस्मिन्नापादतलं भस्मोद्धूलनं । क मणिमाणिक्यमुक्ताफलेंद्रनीलमणिवज्रवैडूर्यादिरत्नालंकारधारणं क चामलामलकफलानुकारिभद्ररुद्राक्षालंकारधारणं । क कौशेयक्षौमपट्टदुकूलचीनांशुकपीतांवराद्यनेकदिव्यांवरैरंगानामाच्छादनं क च वल्कलैर्मृगाजिनैर्गजाजिनैः सिंहाजिनैश्चांगानामाच्छादनं। क नंदनवनप्रतिस्पर्द्धिभवनोपवनलतामंडपेषु स्वैरविभ्रमेण भ्रमणं क चातिनिविडविटपिविटपविकटास्वटवीषु चातिसंभ्रमेण परिभ्रमणं। कावधीरितसुधास्वादैः स्वादीयोभिर्भक्ष्यैर्भोज्यैः पेयैश्चोष्यैरनुदिनमाहारः क चाप्रयासप्राप्तैः स्वयं शीर्णजीर्णैः पर्णैः कंदैर्मूलैः फलैश्चाहारः । क चंद्रोदयदर्शनाल्हादद्रवचंद्रकांतमणिमयशिखरस्रवरसलिलधारासहस्राकांडाडंबरितघनसमयेषु नानामणिमयेषु रम्येषु हर्म्येषु विलासः क च छिन्नभिन्नतृणशलाकाकलितासु कुटीषु गिरिदरीषु तरुकोटरेषु वा निवासः ।

प्रधानौ– (स्वगतं ।) अहो धन्या कापि स्वकार्यसिद्धि-पराङ्मुखी परहितविहितप्रणया च दंपत्योरनयोः प्रज्ञा ।

द्युमत्सेनः– किं बहुना ।

करोतु वत्सा सावित्री पृथ्वीपर्यटनं पुनः ।
अनुरूपं वरं कंचिल्लप्स्यतीशप्रसादतः ॥ २० ॥

अश्वपतिः– आर्य राजर्षे ! विशृंखलाखल्वेतद्विषये वत्साया मनोवृत्तिस्ततस्तन्नियमने निष्फलः प्रयासः सर्वेषां ।

वीरमित्रः– आर्य ! यद्यपि महाराजस्य देव्याश्च सावित्रीविचारः सत्यवत्प्रेम्णाभीष्टतम एव संबभूव । परमस्माभिर्युष्मदुक्तैरवयुक्तियुक्तैर्हेतुभिर्दर्शितेपि विरुद्धत्वे सदाग्रहग्रस्तहृदया सा नात्मनिश्चयं मुमोच । तेन हि नातःपरमेतद्विषये वत्सायै सावित्र्यै वक्तव्यमस्ति ।

अश्वपतिः– एतद्विषये तु केवलं युष्मत्संमतिरेवापेक्ष्यते नान्यत् ।

द्युमत्सेनः– मित्र अश्वपते !

अयं जनस्त्वत्प्रणयप्रबद्धः
सर्वेषु कार्येषु भवद्वशोस्ति ।
तत्रापि चेदृक् शुभकर्म कर्तुं
कथं भवद्वाग्विमुखो भवेद्वा ॥ २१ ॥

पात्रं गात्रं न सावित्र्याः क्लेशानां वनवासिनाम् ।
विचार्येति मया प्रोक्तं समस्तमपि हे सखे ॥२२॥

परं यदि वत्सा सावित्र्येव तादृक्सदाग्रहग्रस्तहृदया तर्हि निरुपायाः स्मः ।

शत्रुशल्यः– तर्हि श्व एव स्वयंवरसंबंधि शुभं कर्म करिष्यामः । इदानीं समासन्नसायंसमयत्वात्पटकुटीमेव गच्छामः ।

अश्वपतिः– आर्य राजर्षे ! स्वकीयसेनासंन्निवेशमभिगंतुं भवद्भिरनुज्ञातमात्मानमिच्छामि ।

द्युमत्सेनः–मित्र ! साधयतु भवान् स्वाभीष्टसिद्धये । पुनः समागमानुग्रहेणानंदनीयोयं जनः । ( इत्युक्त्वोत्थातुमिच्छति । )

अश्वपतिः– आर्य ! अलमलमतिविनयेन । नायमुपचारो मादृशेषु शोभते भवादृशां । गच्छामि । ( इत्युक्त्वा प्रणम्य निष्क्रामति । )

द्युमत्सेनः– प्रिये ! प्रत्यासीदति शिवार्चनसमयस्तच्छिवार्चनपर्णशालामेव गच्छामः । ( इत्युक्त्वा निष्क्रामतः । )

इति तृतीयोंकः ॥

---

श्रीविठ्ठलात्मजनुषोर्द्धशशांकमौले-
र्दासस्य वर्यगुरुकेशवधर्मसूनोः ।
एषा कृतिर्मम तु शंकरलालबंधो-
र्गौरीजिरीशपदयोः कुसुमांजलिः स्यात् ॥ १ ॥

## ॥ अथ चतुर्थोंकः ॥

नेपथ्ये– संचिंतयामि गिरिजाश्रितवामभागं
श्रीमद्गजाननविशोभितदक्षिणांकम् ।
भस्मांगरागवरनागविभूषितांगं
श्रीरोहिणीरमणमौलिमणिं महेशम् ॥ १ ॥

अपि च

संचिंतयामि तमहं मुनयो यदंघ्रि-
ध्यानेन नष्टनिखिलार्तिभरा भवंति ।
व्याधींश्च साधिनिकरान् नितरां निजानां
सद्यो विनाशयति यत्करुणाकणोऽपि ॥ २ ॥

अपि च

संचिंतयामि तमहं परमात्मरूपं
चेतोवचोनिचयदूरनिजस्वरूपम् ।
लीलावलोपितरतीशवरस्वरूपं
दीनानुकंपिनमनुक्षणमिंदुमौलिम् ॥ ३ ॥

( ततः प्रविशत्यप्सरोयुगलं । )

एका– हला मदनमंजरि ! मन्येऽद्य प्राभातिकवर्णनश्रवणा-
त्पूर्वमेव प्रबुद्धो महाराज इति ।

द्वितीया–हला चंद्रावलि ! ननावदेव । समाप्तशिवपूजनोपी-

ति मन्ये यतः स्तुतिपाठ एष श्रूयते।
एका– भवतु। वयमपि प्रभातवर्णनपरं संगीतं कुर्वः।
द्वितीया– यथाभिरुचितं प्रियसख्यै।

(उभे अपि गायतः।)

एका– यश इव परदारालोकलुब्धस्य तारा–
हृदयरमणबिंबं म्लानतामेति सद्यः।
द्वितीया– गुणगण इव लोभक्षोभवन्मानसस्य
क्रमश उडुगणोयं लीयते व्योम्नि हृद्यः॥ ४॥

एका– इह कलकलकेकाकारिणः केकिनोमी
द्वितीया– कलकलमिहकुर्वत्यत्र पुंस्कोकिलाश्च।
एका– इह मधुकरवध्वो मंजु गुंजंति चैता
द्वितीया– इह सरसिजगंधी गंधवाहश्च वाति॥ ५॥

एका– वरफलदलमूलान्याहरंतीह विप्राः
परशिवपदपद्मध्यानमग्नास्तथान्ये।
द्वितीया– कुमुदवनमशेषं म्लानिमेतीह सद्य-
स्तिमिरमपि विलीनं क्वापि शैलोदरेषु॥ ६॥

एका– जगदखिलमपिद्रागालिविद्राणनिद्रा–
भरमिदमतिहर्षाद्धर्मकर्मविधानम्।
उदय उदयशैलालौकिकालंकृतेः श्री-
दिनकरवरमूर्तेस्तत्त्वयं एतैः सुचिन्हैः॥ ७॥

द्वितीया– दिनमणिदिनलक्ष्म्योः संगमे मंगलानि

प्रतितरुवरकुंजं पक्षिणोमी पठंति।
हरिहरिदपि तेनैवोत्सवेनातिहर्षात्
कनकरसमयानीवांवराणि स्म धत्ते ॥ ८ ॥

नेपथ्ये– आर्यपुत्र! सत्यमपि रोचते युष्मदुक्तः स्वयंवरविचारः। परंयुष्मद्विचारान्मद्विचारः किंचिद्भिन्नतां बिभर्त्ति।

मदनमंजरी– हला चंद्रावलि! महाराजो देव्या सहैवात्र समायातीति प्रतिभाति। तदावां दूरं व्रजावः।( इत्युक्त्वा उभे अपि निष्क्रांते।)

( ततः प्रविशति राजाश्वपतिर्देवी मालवी च।)

अश्वपतिः– प्रिये! कथमिव।

मालवी– आर्यपुत्र! अस्ति चेदाज्ञा विज्ञापयामि।

अश्वपतिः– देवि! स्वाभिप्रायनिवेदने नितरामस्त्येव ममाज्ञेति मंतव्यं।

मालवी–नाथ! तदेतदप्रतिममेमचिन्हं। परं स्त्रीधर्मोयं यत्स्त्रीभिर्निजनाथाज्ञामाज्ञिमंतराद्र्धमप्यक्षरं वक्तुं शक्यत इति।

अश्वपतिः– प्रिये! शोभते त्वादृशीनां सत्कुलकामिनीनां सदाभरणमिवैतदाचरणं। परं देव्या विचारो मद्विचारात्कामिव भिन्नतां विभर्तीति श्रोतुमुत्कंठते स्वांतं मे। तदुच्यतां स्वविचार इदानीं।

मालवी– यथाज्ञार्यपुत्रस्य। श्रूयतां। प्राणनाथ! वत्सस्य सत्यव्रतश्चिनपदर्शनात्प्रभृत्येव वत्सायाः सावित्र्या

वत्सेन सत्यवतैव सह स्वयंवरो विधेय इत्यस्ति निश्चयनिबद्धा बुद्धिर्मे। महामुनेर्नारदाच्च तद्गुणश्रवणोत्तरं द्विगुणनिश्चया संजाता सा। इदानीं चास्मिन्निकुंजे पुष्पाणि चिन्वंतं फलानि मूलानि दलानि चाहरंतं वत्सं सत्यवंतमातृप्तिनेत्राभ्यां निपीय परमाल्हादसुधासिंधुमग्नाया मे सहस्रगुणनिश्चयनिश्चला समजनि मनीषा।

अश्वपतिः– प्रिये! प्रियं नः प्रियं नः। किमत्र विचारवैरुद्ध्यम्।

मालवी– नाथ! तदपि कथ्यते। अस्मिन्नेव तपोवने आगामिन्येव वासरे च स्वयंवरसंबंधि शुभं कर्म कार्यमित्यार्यपुत्रस्य विचारः। स्वकीयराजधान्यां समामंत्र्य सर्वानुर्वीपतीन् समाहूय नानादिग्देशस्थान् विद्वद्वरान् कविप्रवरान् कलाकुशलान् निमंत्र्य च प्रशस्तशीलान् समस्तमुनिप्रवरान् शुभे दिवसे शुभे लग्ने कल्याण्यां च वेलायां तन्मंगलं कर्म महामहोत्सवेन कार्यमिति चामुष्या युष्मद्दास्या विचारः। यतः–

> सावित्रीमात्रसंतानावकुलाय महोत्सवम्।
> आर्यपुत्र कदा कुत्र करिष्यावस्तमुत्सवम्॥ ९॥

इदमेवावयोर्विचारवैषम्यं।

अश्वपतिः– (किंचित्प्रहस्य।) प्रिये! युक्तैव प्रियायाः सूक्तिः। परं मन्येऽहं विवाहमहोत्सवारंभोऽपि जामातृसंप-

दैव शोभामुपलभत इति । यर्हि वत्सेन सत्यवतैव सह स्वयं-वरकर्म कारयितव्यमस्ति तर्हि तस्मिन्नीदृशीं दशामनुभवति समारब्धोस्माभिर्विवाहोत्सवः कामिव शोभां लभेत न कामपीति निर्विवादं । अत एवात्रैव तत्कर्म कार्यमिति निर्धारितं मया ।

मालवी— प्राणनाथ ! अवितथेयं नाथस्योक्तिः सद्गुणहीने विपद्गुणलीने दीने सति च जामातरि । परं न वत्सः सत्यवांस्तादृशोस्ति । स तु समृद्धानां शाल्वानामस्त्यधिपतिः । निसर्गसिद्धानुपमासीमशौर्यौदार्यधैर्यस्थैर्यदयादाक्षिण्यादिसद्गुणरत्नरत्नाकरः स स्वयमेव स्वप्रतिपक्षिलक्षपक्षान् क्षपयितुं दक्षस्तथाप्यस्मदीयचमूसमूहसहायमाश्रित्य स्वल्पैरेव दिवसैः स्वकीयां राजधानीं स्वाधीनां विधाय असंख्यहरिकरिनरनौकाद्यलंकृतचतुरंगिणीपरिवृतश्छत्रचामरध्वजव्यजनपताकादिमहाराजविभूतिभूषितश्चागमिष्यत्यस्मदीयां राजधानीं । तत एवेयं सेना वत्सस्य सत्यवतः सहाय्यं कर्तुमाज्ञाप्यतां ।

अश्वपतिः— नास्मिन् समयेस्मत्कृत्यमेतत् ।

मालवी— आर्यपुत्र ! पदभ्रष्ट इति न चिंता विधेया पदभ्रष्टतारूपो दोषस्त्वसिलतामात्रसहायेनापि मया समुत्सारयितुं नाशक्यस्ततोहं तु पदभ्रष्टतां दोषगणनायामेव न गणयामीति प्राणनाथेनैव तदाप्रोक्तं । तद्विषये तु प्रधानौ शत्रुशल्यवीरमित्रावपि साक्षिणौ स्तः ।

( ततः प्रविशतः शत्रुशल्यवीरमित्रौ । )

शत्रुशल्यः– जयतु जयतु महाराजो देवी च ।

अश्वपतिः– आर्य शत्रुशल्य ! इहोपविश्यतां।

शत्रुशल्यः–( प्रणम्योपविशति )

वीरमित्रः– जयतु जयतु महाराजो देवी च ।

अश्वपतिः– मित्र वीरमित्र ! इह स्थीयतां ।

वीरमित्रः– ( तथा करोति । )

मालवी– आर्यौ शत्रुशल्यवीरमित्रौ ।

उभौ– ( बद्धांजली समुत्थाय ।) को नियोगो महादेव्याः ।

मालवी– यदा वयं विचारभवने सावित्रीस्वयंवरविषयकविचारकरणाय स्थितास्तत्र युवाभ्यां पदभ्रष्टतारूपदोषेण दर्शितं स्वविचारवैरुद्ध्यं । तदा महाराजेन किमुक्तमासीत्तत्स्मर्यते ।

अश्वपतिः– प्रिये ! न मयैवमुक्तमिति प्राक्तेवति मयि साक्ष्यपेक्षा । उक्तपूर्वमेव मया प्रथमं वत्सः द्युमवान् स्वपदे स्थाप्योनंतरं च सावित्र्याः स्वयंवरो विधेय इति । परमिदानीं सूक्ष्मया दृशा विचार्यमाणेनैतदुचितमिति मे प्रतिभाति । नैतावदेव श्रुते च मद्विचारे युष्माकमपि तथा प्रतिभास्यति ।

शत्रुशल्यः– महाराज ! देवि ! युवयोः किंविषयो विवाद इति ज्ञातुमुत्कंठा मे ।

मालवी– नहि नहि कश्चिद्विवादः किंतु विचारवैमत्यमेव ।

आर्यपुत्रेण सह विवादकरणं किमस्ति मे धर्मः ।

शत्रुशल्यः– आर्ये ! कथमिव विचारप्रातिकूल्यं ।

मालवी– वत्सायाः सावित्र्याः स्वयंवरविधिरत्रैव तपोवन आगामिन्येव च दिवसे ब्राह्मविवाहविधिना विधेय इति महाराजस्य मतं । अस्मदीयराजधान्यां यथान्यासां राजकुमारीणां विधीयते स्वयंवरविधिस्तथायमपि विधेय इति च मे मतं ।

वीरमित्रः– महाराज ! एतद्विषये तु ममापि मतिर्महादेवीमतमनुसरति ।

शत्रुशल्यः– युक्तमाह वीरमित्रः । कुतो यद्यप्यगण्यानि महाराजस्य पुण्यानि विलोक्य समर्पयिष्यत्येव परमेश्वरो महाराजाय पुत्ररत्नं तथाप्यद्य तु पुत्रत्वं पुत्रीत्वं च वत्सायां सावित्र्यामेवास्तीति निर्विवादं । अतएव तस्याः स्वयंवरविधिस्तु महामहोत्सवेन विधेयः स च वत्से सत्यवति पदभ्रष्टदशामनुभवति न शोभते अतः प्रथमं वत्सं ससैन्यं चमूसमूहसाहाय्यप्रदानेन प्राप्तराज्यं विधाय विधेय इति मे मतं ।

अश्वपतिः– अवगतो युष्माकं सर्वेषां विचारः । इदानीं मद्विचारं निवेदयामि । प्रिये ! प्रथमं भवतीमेव पृच्छामि ।

मालवी– आर्यपुत्र ! अवहितास्म्यार्यपुत्रवचनावलीं श्रवणाभरणतां नेतुं ।

अश्वपतिः–महाराजे द्युमत्सेने पदभ्रष्टे सति प्रिये।
यदभून्मे मनोदुःखं तत्किं जानासि दुःसहम्॥१०॥

मालवी– नाथ! कथमिव न जानामि।

अश्वपतिः– प्रिये! तस्मिन् महाराजे जागर्ति या निर्निमित्ता निष्प्रतिमा च कापि मे प्रीतिस्तामभिजानाति किं देवी।

मालवी– आर्यपुत्र! सम्यगभिज्ञास्मि तत्रापि।

अश्वपतिः– विचार्यं तर्हि। सत्यपि तादृशाप्रतिमे प्रेमणि न मयाद्यावधि किंचिदपि विहितं साहाय्यं तत्किमल्पं त्रपापात्रं?

मालवी– नाथ! युक्तैवार्यपुत्रस्योक्तिः। अतएवेदानीं साहाय्यकरणेन सा त्रपाप्यपाकरणीयेति मेऽभ्यर्थना।

शम्भुशल्यवीरमित्रौ– महाराज! उत्तमं देवीमतं।

अश्वपतिः– (निःश्वस्य।)

न तां त्रपामपाकर्तुं क्षपाकरमुखि क्षमा।
क्रिया त्वदुक्ता युक्तापि मत्युतातित्रपाकरी॥११॥

यत इदानीं विहितं सहाय्यकरणं मे न कश्चिन्मित्रधर्मरूपं गणयिष्यति किंतु स्वकीयपुत्रीशर्मसाधनकर्मरूपमेव गणयिष्यति। भवतु। न तां गणनां गणयत्यंतःकरणं मे। परंतु वत्सया सावित्र्या वत्से सत्यवति दृढं निबद्धस्य निष्प्रतिमस्य निर्निमित्तस्य निःसीम्नः सहजस्य च प्रे-

ण्णः संपदं प्रच्छादयत्यकांडाडंबरा कादंबिनीव शारदें-दुसौंदर्यसंपदमिदानीं विहिता तत्सहायतेति स्फुटं प्रति-भाति । अस्तुनाम । कदाचिन्नगणयामस्तदधि-प्रणयपरतं-त्रास्तथाप्यस्मत्सहायसंपन्नः सत्यवान् विजयश्रीस्वयंवर-णमालार्हतामनुभवेन्न तद्वत्सस्य सत्यवतोपि यशस्करं । नैतदविदितं देव्या यत्—

उत्तमाः स्वगुणैः ख्याता मध्यमाश्च पितुर्गुणैः ।
अधमा मातुलैः ख्याताः श्वशुरैश्चाधमाधमाः ॥१२॥

इति मावोचन् प्राञ्चः प्रज्ञावंत इति । स्वकीयस्वभाव-सिद्धशौर्यौदार्यधैर्यस्थैर्यसौशील्यसारल्याद्यनेकैः सद्गुणग-णैर्निखिलावनिवलयविख्यातमुत्तमोत्तमं च वत्सं सत्यवंतं न सहायसंपादनेनाधमाधमपंक्तिपातिनं कर्तुं कांक्षति स्वां-तं मे । किं च वत्सायाः सावित्र्याः स्वांतं नाविदितमस्माकं । सा हि वत्सेन सत्यवता स्वयंवरमात्रे सिद्धे नंदनवनमिवैत-द्वनं स्वर्णदीमिवैतां नदीं कल्पवृक्षानिवैतान् वृक्षान् सार्व-भौमसंपदभिषेकपदमिवैतचाश्रमपदं द्रक्ष्यतीति । नैतावदे-व । वत्सायाः सावित्र्या वत्सस्य सत्यवतश्च निसर्गभद्राप्तु-खमुद्रैव तयोर्निवेदयति निरंतरनिरवधिनिराबाधसुखपरं-परानुभवभाजनतां । सत्यप्येवमिदानीमस्मत्कृतं साहाय्यं मम राजर्षेर्द्युमत्सेनस्य चामतिमस्य मैत्रीभावे सावित्र्या

**अश्वपतिः**–महाराजे द्युमत्सेने पदभ्रष्टे सति प्रिये ।
यद्भून्मे मनोदुःखं तत्किं जानासि दुःसहम् ॥१०॥

**मालवी**– नाथ ! कथमिव न जानामि ।

**अश्वपतिः**– प्रिये ! तस्मिन् महाराजे जागर्ति या निर्निमित्ता निष्प्रतिमा च कापि मे प्रीतिस्तामभिजानाति किं देवी ।

**मालवी**– आर्यपुत्र ! सम्यगभिज्ञास्मि तत्रापि ।

**अश्वपतिः**– विचार्य तर्हि । सत्यपि तादृशाप्रतिमे प्रेमणि न मयाद्यावधि किंचिदपि विहितं साहाय्यं तत्किमल्पं त्रपापात्रं ?

**मालवी**– नाथ ! युक्तैवार्यपुत्रस्योक्तिः । अतएवेदानीं साहाय्यकरणेन सा त्रपाप्यपाकरणीयेति मेऽभ्यर्थना ।

**शम्भुशल्यवीरमित्रौ**– महाराज ! उत्तमं देवीमतं ।

**अश्वपतिः**– ( निःश्वस्य । )

न तां त्रपामपाकर्तुं क्षपाकरमुखि क्षमा ।
क्रिया त्वदुक्ता युक्तापि प्रत्युतातित्रपाकरी ॥ ११ ॥

यत इदानीं विहितं सहाय्यकरणं मे न कश्चिन्मित्रधर्मरूपं गणयिष्यति किंतु स्वकीयपुत्रीशर्मसाधनकर्मरूपमेव गणयिष्यति । भवतु । न तां गणनां गणयत्यंतःकरणं मे । परंतु वत्सया सावित्र्या वत्से सत्यवति दृढं निबद्धस्य निष्प्रतिमस्य निर्निमित्तस्य निःसीम्नः सहजस्य च मे-

ण्णः संपदं मच्छादयत्यकांडाडंबरा कादंविनीव शारदें-दुसौंदर्यसंपदमिदानीं विहिता तत्सहायतेति स्फुटं प्रति-भाति। अस्तुनाम। कदाचिन्नगणयामस्तदपि-प्रणयपरतं-त्रास्तथाप्यसमत्सहायसंपन्नः सत्यवान् विजयश्रीस्वयंवर-णमालार्हतामनुभवेन्न तद्वत्सस्य सत्यवतोपि यशस्करं। नैतदविदितं देव्या यत्-

> उत्तमाः स्वगुणैः ख्याता मध्यमाश्च पितुर्गुणैः ।
> अधमा मातुलैः ख्याताः श्वशुरैश्चाधमाधमाः ॥१२॥

इति भावोचन् माश्वः प्रज्ञावंत इति । स्वकीयस्वभाव-सिद्धशौर्यौदार्यधैर्यस्थैर्यसौशील्यसारल्याद्यनेकैः सद्गुणग-णैर्निखिलावनिवलयविख्यातमुत्तमोत्तमं च वत्सं सत्यवंतं न सहायसंपादनेनाधमाधमपंक्तिपातिनं कर्तुं कांक्षति स्वां-तं मे। किं च वत्सायाः सावित्र्याः स्वांतं नाविदितमस्माकं। सा हि वत्सेन सत्यवता स्वयंवरमात्रे सिद्धे नंदनवनमिवैत-द्वनं स्वर्णदीमिवैतां नदीं कल्पवृक्षानिवैतान् वृक्षान् सार्व-भौमसंपदभिषेकपदमिवैतच्चाश्रमपदं द्रक्ष्यतीति। नैतावदे-व। वत्सायाः सावित्र्या वत्सस्य सत्यवतश्च निसर्गभद्रामु-खमुद्रैव तयोर्निवेदयति निरंतरनिरवधिनिराबाधसुखपरं-परानुभवभाजनतां। सत्यप्येवमिदानीमस्मत्कृतं साहाय्यं मम राजर्षेर्द्युमत्सेनस्य चाभतिमस्य मैत्रीभावे सावित्र्या

सत्यवति निबद्धे चित्रे पवित्रे प्रेम्णि वत्सस्य सत्यवतो नि-
ष्प्रतिमेषु विक्रमेषु च कलंकमेवोत्पादयति नान्यत्।

**मालवी**– प्राणनाथ! सत्युनाम। काममतिमतिमसो युवसः
परं पुंसां सूक्ष्मा मतिर्या कामपि चेतश्चमत्कृतिं जनयति
न तत्सहस्रांशमपि कर्तुं प्रभवति मतिर्मानिनीनां। उत्त-
मोत्तमः खलु विचारो देवस्येति निःशंकमवगतं मयेदानीं।
तद्यथाभिलषितं करोतु महाराजः।

**प्रधानौ**– देव! आवयोर्मतिरिदानीं युष्मन्मतमेवानुसरति
जानाति चात्मविचारस्य निर्बलतां।

**अश्वपतिः**– प्रतीहार!

**प्रतीहारः**– आज्ञापयतु देवः।

**अश्वपतिः**– वत्सां सावित्रीं स्वयंवरार्हवसनाभरणां देव्या
सह राजर्षेर्द्युमत्सेनस्याश्रमे समागतां द्रष्टुमिच्छामि।

**द्वारपालः**– यथाज्ञा महाराजस्य। (इत्युक्त्वा गंतुमि-
च्छति।)

**अश्वपतिः**– देवि! योयं मया वत्सायाः स्वयंवरविधिर्नि-
र्धारितः स खलु ब्राह्मविवाहविधिरित्युच्यते धर्मशास्त्रे-
षु यो निखिलेष्वपि विवाहविधिषु प्रशस्ततरः परिगण्य-
ते। तस्मिंश्चाधिकमेतदेव कृतं यत्सावित्र्या स्वकीयगला-
वलंबी हीरहारो मद्वापणश्रवणोत्तरक्षण एव वत्सस्य सत्य-
वतो गलेर्पणीयः।

**मालवी**– प्राणनाथ! अतिप्रियं मे तदेतत्। इदानीं वत्सां

प्रति गंतुमाज्ञप्तुमिच्छाम्यात्मानं ।

अश्वपतिः– *साधयतु भवती स्वाभीष्टं ।*

मालवी– यथाज्ञार्यपुत्रस्य । ( इत्युक्त्वा निष्क्रांता । )

अश्वपतिः– अयि शत्रुशल्यवीरमित्री ! वयमपि राजर्षेर्द्यु-मत्सेनस्याश्रमं प्रति गच्छाम । ( इत्युक्त्वा निष्क्रांतः । )

( ततः प्रविशति देवव्रतः । )

देवव्रतः– ( स्वगतं । ) हा विस्मयमयमहोदधौ निमज्जत्यंतः-करणं मे स्मारंस्मारं महाराजस्य द्युमत्सेनस्य विचार-परिपाटीं । नाद्य क्वापि प्रियमित्रं मे प्रज्ञावान् दृश्यते य-स्मै निवेदयामि तद्विचारवैलक्षण्यं ।

( ततः प्रविशति प्रज्ञावान् । )

प्रज्ञावान्– मित्र देवव्रत ! कीदृशविचारवार्द्धिविलीनम-नास्तिष्ठसि ।

देवव्रतः– ( सहर्षाश्चर्यं स्वगतं । ) अहो किं स्मृतमात्र ए-वागतः प्रियसखा मे प्रज्ञावान् । ( प्रकाशं । ) वयस्य प्रज्ञाव-न् ! दर्शनेनाधुना ते परमं परितोषमभजत्स्वांतं मे ।

प्रज्ञावान्– *प्रियसखे !* समानमेवन्मिथोपि परं प्रहर्षदरि-द्रा मुखमुद्रैव निवेदयति विषादविवशस्वांततलं ते । तद्यदि न गोप्यं तर्हि निवेदनीयं विषादनिदानं ।

देवव्रतः– तर्क एष भवतो न शोभते

मित्रधर्मपरतत्ववेदिनः ।

गोप्यमस्ति किमिहाचलातले
मित्रतोऽनिशमभिन्नचेतसः ॥ १३ ॥

परं यथा न मदुक्तेनावयोरंतःकरणद्वयंविनान्यः कश्चिदभिज्ञो भवेत्तथा विधेयं ।

प्रज्ञावान्– प्रियसखे देवव्रत ! यद्येवं तर्हि न मह्यमेतत्कथनीयं यदहं न किंचिदपि प्रियमित्रात्सत्यवतो गोपयितुं शक्नोमि ।

देवव्रतः– प्रियमित्रचिंतामणये सत्यवते मदुक्तं वक्तव्यं नवेति श्रुत्वैव विचारणीयं । किंच नाप्यसावावयोर्भिन्नः ।

प्रज्ञावान्– अवहितोस्मि तर्हि श्रोतुम् ।

देवव्रतः– प्रियसखे प्रज्ञावन् !

सत्यवान् सकलसत्कृत्सवान्
मातृतातपदपद्मभक्तिमान् ।
यादृशो न खलु तादृशो नरः
संबभूव भवितास्ति वापरः ॥ १४ ॥

प्रज्ञावान्– तदेतत्संतोषपोषकं नः । ततस्ततः ।

देवव्रतः– निर्व्यलीकभक्तिभरपरवान् स खलु मातापितृपदपद्मपरिचर्यायामप्रतिमेन प्रेम्णा न शीतं नोष्णं न वातं न वर्षां न दुःखं न भयं च गणयति । यदा यदा माता पिता वा यथा यथा यद्यच्च कर्तुमाज्ञापयतस्तदा तदा तथा तथा तत्तच्च निष्प्रमादं कर्तुं परायणांतःकरणः प्रवर्त-

त एव । परं न कदाचिदस्य तन्निमित्तं म्लानिमुपगच्छति मुखमुद्रा । आभ्यंतरमित्राभ्यामप्यावाभ्यां न तन्मुखात्कदाचिदपि श्रुतमस्ति मातापितृपरिचर्यालस्यलेशक्लेशवद्वचोपि ।

प्रज्ञावान्– एवमेव । ततस्ततः ।

देवव्रतः– कमलकोशकोमलतरकरचरणयुगलः स्वयं राजकुमारः सन्नपि स्वकीयपितृपादाज्ञोत्तरक्षण एव सजलजलधरमंडलीविलीनग्रहर्क्षगणतया नानुमेयभयातशेषयामासु जलदसमयत्रियामास्वप्युत्थाय निबिडतरतरुनिकरातिघनेभ्यो विजनेभ्यो वनेभ्यो भगवतो भास्करस्योदयात्पूर्वमेव विल्वदलतुलसीदलकुशकुसुमसमित्प्रकरान् फलानि मूलानि चाहरति ।

प्रज्ञावान्– प्रियसखे देवव्रत । नैतदशेषमविदितं मे । परमं परितोषस्थानं चैतन्नः । परं भवदौदासनिदानं नाद्यापि मयावगतं ।

देवव्रतः– उच्यत इदानीं । तादृग्भक्तिभरपरवतोपि सखवतोऽभ्युदयविरुद्धविचारौ मातापितरौ वर्तेते एतदेवौदास्यमुत्पादयति मानसे मे ।

प्रज्ञावान्– न संभवत्येतत् ।

देवव्रतः– तर्हि कथमस्मिन् विचारे विरुद्धता तयोः ।

प्रज्ञावान्– कस्मिन् विचारे ।

देवव्रतः– तदपि निवेद्यते शृणु । अद्य निशीथ आप्तः स-

सवान् पितृचरणैर्यद्वत्स सत्यवन् ! महाराजोऽश्वपतिः सूर्योदये समागमिष्यति ततस्तदागमनात्पूर्वमेव समागमि-वधूजनैर्भाव्यमस्माभिरतः समानय शीघ्रं कुसुमानीति ।

प्रज्ञावान्– सम्यगेतदाज्ञप्तं ।

देवव्रतः– श्रुत्वैवैनां पित्राज्ञां सत्यवान् पुष्पाण्यवचेतुं शीघ्रं निरगात् । शीतभीतस्वांततयालस्येन चाहं तस्यामेव पर्णशालायामुपाविशं ।

प्रज्ञावान्– ततस्ततः ।

देवव्रतः– ततः प्रावोचन् पितृचरणाः । देवि ! महाराजोऽश्वपतिः केनापि प्रकारेण वत्सां सावित्रीं प्रतिबोध्य सत्यवत्स्वयंवरविमुखविचारां कुर्याच्चेत्साधु स्यादिति ।

प्रज्ञावान्– ततस्ततः ।

देवव्रतः– ततो मातरोऽप्यवोचन् । ममाप्येष एव विचारो विचरति चित्ते कथमिव कमलदलकोमलांगी सानुभविष्यति वनवासव्यसनानीति ।

प्रज्ञावान्– ततस्ततः ।

देवव्रतः– यावद्बुद्धिबलं मया नृपतये प्रोक्तं मुहुः सत्यवान्
सावित्र्या उचितोऽस्ति नेति निखिलं देवि त्वयापि श्रुतम् ।
मातस्तत्पुनरप्यहं प्रियतमे वक्ष्याम्यवश्यं यतः
सावित्र्याः परमोदये सति सति स्वांतं कृतार्थं हि नः॥१९

इति पितृचरणानां श्रुत्वा वचो मातृचरणैरप्युक्तं । आर्यपुत्र ! एवमेव ।

अतर्क्यहेतु प्रेमेति लोकोक्तिर्न मृषा यतः।
सावित्र्यां स्निह्यति स्वांतं वत्से सत्यवतीव मे ॥ १६ ॥

अतोवश्यं यथा सा वनवासव्यसनिनी न भवेत्तथा विधेयमिति।

प्रज्ञावान्– ततस्ततः।

देवव्रतः– वनात्प्रतिनिवृत्तस्य सखे सत्यवतस्ततः।
वंदेहमिति वाग्येतुस्तद्वार्ताविरतेरभूत् ॥ १७ ॥

प्रज्ञावान्– ततस्ततः।

देवव्रतः– ततस्तद्विचारश्रवणसंजातौदास्योहमद्य माधवीमंडपमभ्यागतोस्मि।

प्रज्ञावान्– सखे! क इदानीमेतद्विषये तर्कस्ते।

देवव्रतः– (दीर्घमुष्णं च निःश्वस्य।) सखे! शृणु।

इह ये तु हितैषिणो विधौ
विमुखे तेप्यहितैषिणो नृणाम्।
प्रभवंति न चेदिमौ कथं
पितरौ पुत्रहितेतरे हितौ ॥ १८ ॥

प्रज्ञावान्– (सस्मितं।) देवव्रत! नायं देवताराधनव्रतविषयो विचारः। किंतु प्रज्ञावन्मात्रगम्योतिरम्यः कोप्यगम्यगांभीर्यो मित्रधर्मविचारः।

देवव्रतः– (सरोषं।) इदानीं प्रज्ञावतो भवतः सकाशाच्छ्रोतव्यं यन्मातापित्रोर्विचाराणां सत्यवतिमयाहितकारित्वं

कथमिव प्रतिपादयसीति ।

प्रज्ञावान्– ( सहासं । ) प्रियमित्र ! न रोषावेशविवशेन भाव्यं भव्येन । नेदमविदितं प्रायो रसशास्त्रेषु शृंगारादयो नवसंख्यास्ततोप्यधिकसंख्या वा संति रसा इति ।

देवव्रतः– अथ किं । सत्यमेव । किं तेन ।

प्रज्ञावान्– तत्र सौहृदवत्सलावपि गणितौ रसौ ।

देवव्रतः– एवं । गणितावेव ।

प्रज्ञावान्– तत्र मित्रगतं भ्रातृगतं च निर्निमित्तं निष्प्रतिमं च यत्किमपि प्रेम तत्सौहृदरसशब्देनोच्यते । स्वकीयपुत्रपौत्रप्रपौत्रगतं दुहितृदौहित्रप्रदौहित्रगतं निर्व्यलीकमकृत्रिमं च यत्किमपि प्रेम तद्वत्सलरस इत्युच्यते । यद्यपि शृंगारवीरयोरिव हास्यकरुणयोरिव च न सौहृदवत्सलयोरस्तिविरोधस्तथाप्येकतरस्य यदा वृद्धिर्भवेत्तदान्यतरमविरोधेपि समाक्रम्य समुज्जृंभत इति स्वभावसिद्धं । इदानीमपि तातपादानां स्वपुत्रगतं निष्प्रतिमं निर्निमित्तमपि वत्सलरसमाक्रम्य समुच्छलंति स्वकीयसन्मित्रगतसौहृदरससुधासिंधूर्मय इति मंतव्यं ।

देवव्रतः– भवता विस्तराद्यातपादानां वत्सलरसः सौहृदरससुधासागरतरंगेषु निमग्न इत्युक्तं । मया पुनः संक्षेपेण हितैषिणोरपि मातृपित्रोर्विचारः सत्यवदहितकारीत्युक्तं । परं किमेतावता कपोलकल्पनाडंबरेण सत्यवतो हृदयं स्वयंवरणमाला प्रपिता ।

प्रज्ञावान्– ( प्रहस्य । ) अथ किं । नाद्यापि पतिता परमव-
श्यं पतिष्यति ।

देवव्रतः– किमापत्तिर्थिता वा ।

प्रज्ञावान्– नहि नहि । स्वयंवरमालैव ।

देवव्रतः– ( निःश्वस्य । ) सखे ! यत्र

स्वयंवरणमालासेराशा काशाब्जिनीनिभा ।

मंतव्या पितरौ यस्मात्र तल्लाभाभिलापिणी ॥ १९ ॥

प्रज्ञावान्– सखे देवव्रत ! वृद्धयोस्तयोरेतद्विचारविरुद्धबु-
द्धित्वे किंनिमित्तमिति जानासि किम् ।

देवव्रतः– न जानामि । प्रियमित्रेणैव ज्ञातं चेद्वक्तव्यं ।

प्रज्ञावान्– शृणु तर्हि । महाराजाश्वपतिंप्रति निबद्धमकृत्रि-
मं सौहृदमेव । इदानीं चिरं चेतसा चिंतनीयं प्रियमित्रेणै-
व तत् यत् यथा महाराजो द्युमत्सेनो निजमित्रस्याश्वपतेः
पुत्र्यां सावित्र्यां पुत्रनिर्विशेषशेमुपीकस्तदीयाभ्युदयैक-
निबद्धहृदयतया कृतसत्यवत्पाणिग्रहणा वत्सा सावित्री
माऽनुभवतु वनवासव्यसनानीति विचार्य स्वौरसतनया-
भ्युदयहानिमपि न प्रगणय्य सावित्रीसुखाभ्युदयाभि-
वृद्धिमेवाभिकांक्षति । तथाश्वपतिरपि निजमित्रस्य द्युम-
त्सेनस्य पुत्रे सत्यवति निष्प्रतिमप्रेमपरतंत्रस्तदीयसुख-
परंपराभिवृद्धये न चिंतयिष्यति किं ।

देवव्रतः– ( क्षणं विचार्य । ) अवश्यं युज्यत एव तादृशी

चिताश्वपतेः । प्रियसखे ! किं तर्हि मातापितृभ्यां निषिद्धोप्यश्वपतिः स्वकुमार्याः सत्यवता सह स्वयंवरं कारयिष्यतीत्यनुमानं ते ।

प्रज्ञावान्– नानुमानं मे । किंतु हृदयचक्षुषा पश्यामि ।

> आज्ञप्ता गुरुभिरनर्घवस्त्रभूषा
> हस्ताभ्यां वरवरणस्रजं वसाना ।
> सावित्री स्वयमुपयाति सत्यवंतं
> प्राणेशं निजमिह संवरीतुमेषा ॥ २० ॥ इति ।

नेपथ्ये– *अपसरतापसरत मान्या मुनयो यदिदानीं* देव्या मालव्या सह कुमारी सावित्री माधवीमंडपममुं सत्यवत्स्वयंवरणाय प्रविशति ।

देवव्रतः– ( सहर्षं । ) वयस्य ! परमदयालुना परमेश्वरेण विहितं वचस्ते सत्यं ।

प्रज्ञावान्– अथ किं । महाराजस्याश्वपतेः प्रतीहारस्यैवायं स्वरः श्रूयते तदेहि तदागमनात्पूर्वमेवापसरावः । मातरं शैब्यां च माधवीमंडपागतमहादेवीमालवीवृत्तांताभिज्ञां कुर्वे । ( इति निष्क्रामतः । )

( ततः प्रविशति पर्णशालायां देव्या शैब्यया सह महाराजो द्युमत्सेनः । )

द्युमत्सेनः–प्रिये ! समाप्तशिवपूजनोहं । देव्याः परिसमाप्ता शिवपूजा न वा ।

**शैब्या**– आर्यपुत्र ! स्तुतिपाठपुष्पांजलिमात्रशेषा मे शिवपूजा।

**द्युमत्सेनः**– भवतु। विधीयतां स्तुतिपाठः। (अन्यतोवलोक्य।) वत्स सत्यवन् !

**सत्यवान्**– आज्ञापयंतु तातपादाः।

**द्युमत्सेनः**– परिसमाप्तपरमेश्वरपरिचर्यो वत्सः।

**सत्यवान्**–अथ किम्।

**द्युमत्सेनः**– यद्येवं तर्हि महाराजमश्वपतिं प्रत्यभिसर।

**सत्यवान्**– यथाज्ञा तातचरणानां। (इति निष्क्रांतः।)

**द्युमत्सेनः**– देवि ! किमप्यलौकिकमेव वत्सस्य सत्यवतः सौजन्यम्।

**शैब्या**– एष युष्मत्पुण्यपरिणामः।

**द्युमत्सेनः**– न केवलं सत्यवत्येव तत्। किंतु तन्मित्रयोः प्रज्ञावद्देवव्रतयोरपि सौजन्यातिरेकः कोप्यप्रतिम एव परिस्फुरति।

**शैब्या**– आर्यपुत्र। एवमेव। तौ तु मातापित्रोरिवावयोरनुवासरं सेवायां सोत्साहौ।

**द्युमत्सेनः**– देवि ! अप्रतिमप्रणयपात्राभ्यां ताभ्यां सत्यवता चात्मानं प्राप्तपुत्रत्रयं मन्ये।

**प्रज्ञावान्**– देवव्रत ! पश्य महत्त्वमेतदेतयोः।

**देवव्रतः**– तयोरिवतयोर्मित्र महत्त्वमिति मे मतिः।
कौ वा सपुत्रमित्रेपि पुत्रप्रेमपरौ परौ॥ २१॥

शैव्या– प्राणनाथ ! ममापि वत्से सत्यवतीव प्रेमपरवती म-
तिर्वत्से प्रज्ञावति वत्से देवव्रते च । सत्यवत इव तयोरपि
वियोगो दुःसहो मे । कथं नाद्यापि तावत्र समागतौ ।

प्रज्ञावान्–
देवव्रतश्च– } ( प्रविश्य । ) अयि मातापितरौ ! प्रणमावः ।

द्युमत्सेनः– कल्याणशालिनौ भूयास्तं ।

शैव्या– वत्सौ ! चिरंजीवतं ।

द्युमत्सेनः–वत्सौ ! कल्याणीयं प्रातर्वेला क्वातिवाहिता
युवाभ्यां ।

प्रज्ञावान्– माधवीमंडप एव स्वकीयबालबुद्धिविचारवारि-
धिनिमग्नयोर्व्यतीता सा । सांप्रतं च तत्र प्राप्तां महादेवीं
मालवीं कुमारीं सावित्रीं च विलोक्य तद्वृत्तांतनिवेदना-
यात्रागतौ स्वः ।

द्युमत्सेनः– ( साश्चर्यानंदं । ) किं प्राप्तैव देवी मालवी पुत्री
सावित्री च । तर्हि ( शैव्यामंगुल्या दर्शयन् । ) त्वरयैनाम-
पि तत्र नयतं ।

उभौ– यथाज्ञा तातचरणानां । ( इत्युक्त्वा शैव्यां प्रति । )
मातस्त्वर्यतां ।

शैव्या– क्षणं विलंब्यतां । स्तुतिपाठं समाप्य समागमिष्या-
मि । ( इति स्तुतिपाठं कुरुते । )
करुणाकर देव पापिनामपि पापान्यपि तापमापदः ।
सचराचरविश्वतात हे हरते हे हर ते दयोदयः ॥ २२ ॥

न मया शिवभक्तिरादृता न च चित्तेऽपि विरक्तिराधृता ।
अभवं परदुःखदुःखिनी न कदापीह सदाशिव प्रभो ॥
समपूरि मया दयानिधे न पराशापि परावरप्रभो ।
अणुमात्रमपीह निर्मितं न मया पुण्यमपुण्यमग्नया ॥
नहि पूजनरीतिरुत्तमा शिव ते पादसरोजयोः कृता ।
न तव स्तव ईश वास्तवः समकारि स्मरणं च कर्हिचित् ॥
न जपो न तपो न संयमो न शमो नास्ति दमोप्युमेश मे ।
प्रणतप्रियतां विचार्य ते प्रणतां मां परिपाहि केवलम् ॥
श्रुतिरद्रिसुतेश न श्रुता स्मृतिरप्यत्र न संस्मृता मया ।
विदिता नहि धर्मपद्धतिर्विदितं केवलमेव ते पदं ॥
करुणावरुणालय प्रभो करुणावान् भव वा न वा मयि ।
न परं भवतः परोमरो भवरोगार्तिहरो हरास्ति मे ॥
भजतां भवदंघ्रिपंकजं भव शुष्यंति हि शोकसागराः ।
श्रुतिगोचरतां कदाचिदप्यनुयांतीह न दुःसहा गिरः ॥
बहवो भवदंघ्रिपूजनादपि रंका अभवन्नरेश्वराः ।
अपि पापतमा अपापिनो जडचित्ता अपि सत्कवीश्वराः॥
अनपत्यतयातिपीडिताः सदपत्यप्रवरा धरातले ।
अभवंश्च भवंसनेकशः शिव युष्मत्पदपद्मपूजनात् ॥
अयि मंदतरायुषोप्यहो भवदीयानुपमप्रसादतः ।
अजरा अमरा नराः कति प्रतिकल्पं प्रभवंति न प्रभो ॥
अगुसार्द्रमनोवचोवपुःकृतयो जन्मशतेष्वपीह ये।

शिव तेपि शिवामृतांबुधौ विनिमग्ना दयया त्वदीयया ॥

अमुरसुरनरा वा यक्षरक्षोवरा वा
सुरमुनिमुनिवर्याः सिद्धविद्याधरा वा ।
प्रबलबलविलासास्तेभवन् यैस्त्वदीयं
चरणकमलयुग्मं सेवितं प्रेमपूर्णैः ॥ २४ ॥

(इति स्तुतिपाठांते ।) प्राणनाथ ! अनुजानातु मां माधवीमंडपं गंतुं प्राणनाथः ।

द्युमत्सेनः– साधयतु देवी स्वाभीष्टसिद्धये ।

शैब्या–वत्सौ देवव्रतप्रज्ञावंतौ ! दर्शयतं मे माधवीमंडपमार्गं ।

देवव्रतप्रज्ञावंतौ– इतइतः प्रचलतु माता । (इति ताभ्यामुपदिश्यमानमार्गा निष्क्रांता शैब्या । )

द्युमत्सेनः– (स्वगतं ।) संजातेपि मित्रोदये कथं न सन्मित्रमुखदर्शनसुखमनुभूयते । तदभिमुखं प्रेषितो वत्सः सत्यवानपि कथं नाद्यापि प्रतिनिवृत्तः ।

(ततः प्रविशति सत्यवता प्रधानाभ्यां चानुगम्यमानो राजाश्वपतिः ।)

सत्यवान्– आर्य ! एष आर्योश्वपतिः ।

द्युमत्सेनः– (साश्चर्यानंदं ।) आगम्यतामागम्यतां । (इत्युत्थातुमिच्छति ।)

अश्वपतिः– अलमलमतिविनयेन । (इत्युक्त्वा प्रणम्य प्रधानाभ्यां सहोपविशति। )

द्युमत्सेनः– वत्साश्वपते ! कथमियानत्रागमने विलंबोभूत् ।

अश्वपतिः– आर्य राजर्षे! महाश्रममनोहरतां प्रेक्षमाणेन मया न कालातिक्रमोवगतः।

द्युमत्सेनः– वत्स अश्वपते! किमपि भवंतं विज्ञप्तुमिच्छामि।

अश्वपतिः– आर्य! आज्ञप्तुमिति वक्तव्यं।

द्युमत्सेनः– एवं मन्यसे चेन्नोल्लंघनीयं वचो मे।

अश्वपतिः– आर्य! भवदाज्ञापरिपालनेपि प्रमाद्येदश्वपतिरिति शंकसे किं।

द्युमत्सेनः– नहि नहि।

अश्वपतिः– तर्हि काममाज्ञप्तुमर्हीयं जनस्तदाज्ञाप्यतां।

द्युमत्सेनः– मित्रवर्य! पृच्छामि भवंतमेवैतत्–

> यया सरसि मानसे विमलमौक्तिकाहारया
> तथा सुरसरिज्जले विकचचंदने नंदने।
> कृता जनिदिनात्स्थितिर्वसतु सा वने निर्जने
> मरालकुलकामिनीत्यहह कोपि किं वक्ष्यति। इति।

अश्वपतिः– आर्य राजर्षे! यदि तस्या हृदयसंर्वस्वं प्राणप्रियो मरालकुलनायको विधिनियोगात्पापयोगाच्छापयोगादहृष्टयोगाद्वा घनतरनिर्जनवनवासमप्यमनमनुभवति तर्हि न तेन सह वसत्वेषेति न कोपि वक्ष्यति। नैतावदेव तादृयसंमतिमदातारमपि सत्संमतिमदातारं न कश्चिद्गणयिष्यति।

द्युमत्सेनः– तर्हि निरुपाया वयं ।

शत्रुशल्यः– देव ! मार्गे तपोवनप्रेक्षणप्रसंगेनास्माकं महान् कालातिक्रमोऽभूत् तदद्य माधवीमंडपं प्रति गंतुमेवोचितं ।

अश्वपतिः– आर्य ! युक्तैव शत्रुशल्यस्योक्तिस्तदेहि गच्छामः ।

द्युमत्सेनः– यथा रोचते युष्मभ्यं सर्वेभ्यः ।

अश्वपतिः– (द्युमत्सेनस्य करं गृहीत्वा ।) इत इत आर्य ॥
(इति वदन् सर्वैः सह निष्क्रांतः ।)
(ततः प्रविशतो माधवीमंडपस्थिते मालवीसावित्र्यौ ।)

सावित्री– (स्वगतं ।) न विलंबावलंबं सहते स्वांतं मे । (प्रकाशं) मातः ! कथमद्यापि कोप्याश्रमजनो न नो दृष्टिपथमवतरति ।

मालवी– वत्से ! अस्मदागमनक्षण एव तौ मुनिकुमारौ कापि निष्क्रम्य गतौ । मन्ये तयोर्मुखादुपलब्धास्मदागमनप्रवृत्तिर्महादेवी शैब्येति । परं स्वकीयनित्यकर्मपरिसमाप्तौ समागमिष्यति सा । (इत्युक्त्वा मंडपद्वारं प्रति विलोकयति ।)

प्रतीहारः– (प्रविश्य ।) देवि ! माधवीमंडपद्वारमुपस्थिता ऋषिकुमाराभ्यामवलंब्यमाना देवी शैब्या ।

मालवी– (साश्चर्यानंदमुत्थाय आमंडपद्वारमागत्य शैब्यायाश्चरणयोर्निपत्य च ।) आर्ये ! प्रणमत्येषा मालवी ।

शैब्या– सखि मालवि ! नातिविनयः समुत्पन्नसौहृदेषु शोभते । (इत्युक्त्वोत्थाप्य च तां प्रेम्णाश्लिष्य तदीयं करमालंब्य माधवीमंडपं प्रविशति ।)

सर्वे– (यथोचितस्थानेषूपविशंति च ।)

ऋषिकुमारौ– मातर्वयं गच्छामः ।

शैब्या– वत्सौ ! गच्छतं ।

प्रज्ञावान्– सखे देवव्रत ! एहीतो गच्छावः । (इत्युक्त्वा निष्क्रांतौ ।)

सावित्री– (समुत्थाय ।) मातरहं सावित्री प्रणमामि भगवत्यै । (इत्युक्त्वा शैब्यायाश्चरणयोः पतति ।)

शैब्या– वत्से ! अखंडसौभाग्यसंपद्भव ।(इत्युक्त्वोत्थाप्य च तां स्वांके स्थापयति ।)

सावित्री– मातरमुनानुग्रहेण कृतार्थं मन्य आत्मानं ।

शैब्या– वत्से । प्रियसख्या मालव्या जठरजन्मनैवैतादृशानुग्रहपात्रमसि ।

मालवी– देवि ! भवतीपदपद्मदर्शनानंदकंदमदतया मन्येऽमुं वासरमुत्तमोत्तमतमं ।

शैब्या– प्रियसखि ! समानमेतन्मिथोप्यावयोः । परमकृपामृतप्रपायमानमानसः परमेश्वरः पूरयति पामराणामपि नराणां कालेन वांछितानि ।

मालवी– आर्ये ! भवतीदर्शनात्परितुष्टस्वांताया अपि दूयते मे मानसं आर्याया विलोक्येमां दशां ।

शैब्या– वत्से! किमत्र मनोदुःखकारणं।

सच्छास्त्रसत्संगविशुद्धधीभिस्त्वापत्सु संपत्सु समानधीभिः।
सदा सदाचारपरैः परेशपरैर्नरैर्भाव्यमिहाप्रमत्तैः ॥ ३६ ॥

इति प्राक्तनमशावत्प्रदर्शितः पंथाः। तत आपत्स्वनाकुलत्वं संपत्स्वनुच्छृंखलत्वं च सत्कुलकामिनीनां धर्म एवं विचार्य न मन्यनसि तद्विषयो विषादः। प्रियसख्यापि च न तद्विषयो विषादो विधेयः।

मालवी– आर्ये! निःसीमानः केप्यानंदकंदांकुरा विकसंति भगवतीसमागमादेव। सदुपदेशवचोभिश्चैभिः कृतकृत्य एवात्मा मे कृतः। (ततः प्रविशंति माधवीमंडपं गच्छंतो द्युमत्सेनाश्वपतिसत्यवत्प्रधानाः।)

प्रतीहारः– (उत्थाय प्रणम्य च।) देव! संति माधवीमंडपे आर्या शैब्या देवी मालवी वत्सा सावित्री च। ततः क्षणमलंकुर्वंतु भवंतः स्थलमेतद्यावदहं निवेदयामि युष्मदागमनं ताभ्यः।

अश्वपतिः– प्रतीहार! वक्तव्या मद्वचसा देवी सर्वापि राज्यरीतिरस्माभी राज्य एव स्थापिता किंचेदमाभ्यंतरमंडलमेव ततो न युष्माभिः सर्वाभिरपि लज्जा-

प्रतीहारःशात्कचिद्गंतव्यं वयमप्यागच्छाम इति।

ता ऋाः–यथाज्ञा देवस्य। (इतिगत्वागत्य।) देव! विज्ञाप-

मालवी– ? यथारोचते देवायेति।

याश्वरणयोःविशंति सर्वेपि माधवीमंडपं स्त्रियश्च सर्वा

अभ्युत्थानं कृत्वा मानमासनानि चार्पयंति।)

**मालवी**– (द्युमत्सेनं प्रति।) प्रणमामि मालव्यहमार्येभ्यः।

**द्युमत्सेनः**– वत्से! संतु सर्वेऽभिलापास्ते पूर्णाः।

**सावित्री**– प्रणमामि साविञ्यहं तातचरणेभ्यः।

**द्युमत्सेनः**– वत्से! सौभाग्यसंपद्भूमिर्भव।

**सत्यवान्**– (मालवींप्रति।) प्रणमाम्येपोहं सत्यवान् मातृचरणेभ्यः।

**मालवी**– वत्स! दीर्घायुर्भव। (इत्युक्त्वा करे गृहीत्वा तं स्वांके स्थापयितुमिच्छति।

**सत्यवान्**–नहि नहि मातर्युष्मत्समीप एव स्थास्यामि। (इत्युक्त्वा मालवीसमीप एवोपविशति।)

**अश्वपतिः**– प्रिये! अहोतिशेते साम्राज्यसंपदमपि माधवीमंडपशोभेयं यतः–

निर्मलतरदूर्वादलनीलतमां वेदिकां द्युमत्सेनः।
अधितिष्ठति यां हसति स्वासनमपि चेंद्रनीलमणिबद्धं॥

शैव्यारूढाप्येपा वेदी नेदीयसी राज्ञः।
प्रकचारुणप्रसूना माणिक्यमयीव संभाति॥ ३८॥

किंचेयं देव्या वत्सेन सत्यवता चाधिष्ठिता वेदिकापि मुकुलितकुंदकुसुमकलिकावलिकाभिः परित आवृता मुक्ताफलावलिखचितस्य सिंहासनस्य शोभामनुकरोति। मन्ये तदार्यस्य पुण्यपरिपाकेनैव राज्यपदभ्रष्टस्यापि राज्य-

पदसुखमनुभावयितुं माधवीमंडपोयं निष्पन्न इति ।

**मालवी**– यथोच्यते आर्यपुत्रेण तत्तथैव । वनेप्यनुपहतमहिमानो हि महात्मानः । सौवर्णरौप्यसिंहासनशोभां तिरस्कुर्वंत्येता वेदिकाः ।

**अश्वपतिः**–(समुत्थाय द्युमत्सेनंप्रति ।) आर्य राजर्षे ! बहुरत्ना वसुंधरेति लोकोक्तिरन्वर्थैव यतो विलसंति बहूनि रत्नानि वसुंधरायां । तथाहि। कानिचिद्रत्नानि रत्नाकरेभ्यः कानिचिद्रत्नानि गिरिवरेभ्यः कानिचिद्रत्नानि च खनीभ्योपि समुत्पद्यंते । किंच पुरा किल सुरासुरसमूहैर्मथ्यमानात्क्षीरनीरनिधेरपि समुद्भूतानि कानिचिद्रत्नानीति श्रूयत इतिहासेभ्यः । भवंत्वपरा अपि रत्नोद्भूतिभुवो वा भवेस्मिन् परं विद्वांसो न तानि रत्नानि रत्नगणनायामेव गणयंति न तेषु रत्नेषु लुभ्यंति न तानि रत्नानि चाभरणतया धारयंति । विद्वांसो यानि रत्नानि रत्नगणनायां गणयंति विद्वांसो यानि रत्नानि शिरसा धारयितुमिच्छंति विद्वांसो यानि रत्नानि गले प्रवद्धुमुत्सहंते विद्वांसो यानि रत्नानि च हृदये स्थापयितुमुत्कंठंते तानि रत्नानि कान्यपि भिन्नान्येव । तेषामग्रे हास्यास्पदं हीरावलयो निर्माल्या इंद्रनीलमणयो नीरागाः पद्मरागा निष्फलानि च मुक्ताफलानि प्रतिभांति । अनारूढशाणचक्राणामस्पृष्टसूचीमुखानामदृष्टायोविघातव्यथानां च तेषां समुत्पत्तिक्षेत्रं विधातृव्यापारपारावार एव ।

नैतानि केवलं रत्नानि स्वोद्भवभुवमेव प्रकाशयंति किंतु स्वान् स्वान् देशानप्यशेषान् प्रकाशयंति । प्रेक्षावंत एव तत्परीक्षां कर्तुं प्रभवंति । प्रवयसो हीरेंद्रनीलमणिमाणिक्यमुक्ताफलादिशिलाशकलपरीक्षणक्षीणवयसः परीक्षका उपनेत्रचतुष्टयसहायवंतोपि न तेषां तारतम्यं निश्चेतुं प्रभवंति । इत्याद्यनेकाद्भुतगुणगणवंत्यप्रतिहतप्रभाप्रभावानि च मानवरत्नानि च केषां न नेत्राण्यानंदयंति । मन्ये किल विचित्रवस्तुनिर्माणनिपुणो द्रुहिणो यदा यदा मानवरत्नरचनां कर्तुमिच्छति तदा तदा पुरातनेभ्यो रत्नेभ्योऽद्भुतान् गुणान्मानवरत्नेषु निःक्षिपतीति। तत एव कल्पवृक्षाणां कामदुघानां चाभीष्टार्थवर्षित्वं मदिराया मदजनकत्वं पीयूषरसस्याप्रतिमं माधुर्यं तेषां वचनेष्वनुभूयते। उच्चैः श्रवसश्चंचलता तेषां प्रज्ञायामैरावतस्योज्वलता धीरता च तेषां मनसि चंद्रमस आल्हादकत्वं तेषां श्रीलेप्सरसां सभारंजकता, कौस्तुभस्य कठिनता च तेषामापत्समयहृदयेषु च स्फुटमनुभूयंते । तथैव भगवतो धन्वंतरेर्वैद्यविद्या तेषां निसर्गसिद्धायां परदुःखभंजकतायां विकसतितरां । अतिदुर्लभः खलु तादृशानां जंगमरत्नानां परिपाकः । कुत्रचित्कदाचित्कैश्चिद्देवागण्यैः पुण्यैः प्राप्यते तत् । येषां परीक्षानिकषो महापस्मृहार एव येषां शाणचक्रं सदुसदुपदेश एव येषां च गौरवज्ञापिका सद्गुणगणशालिनां गुणरागिणां च सह

दयानामंतःकरणतुलैव तानि रत्नानि दृष्टमात्राण्यपि केषां न चेतांसि परमाल्हादनिमग्नानि कुर्युः । मन्ये समस्तप्रशस्तवस्तुयुगलसंपत्संपादनपरैव वेधसो मनोवृत्तिरिति । ततएव यदा यदा दयामृतमयाशयो भगवानात्मभूः सृजति भूतलरत्नभूषणं नररत्नं तदा तदा तदनुरूपं नारीरत्नमपि सृजत्येव । तथाहि । यदा महाराजस्य वीरसेनस्य सद्मनि पुण्यश्लोकनलस्वरूपं नररत्नं प्रादुर्बभूव तदा भीमभूभुजो भर्मणि दमयंतीस्वरूपं नारीरत्नमपि संबभूव । यदा श्रीरामचंद्रस्वरूपेण मानवरत्नेन रघुराजराजधानी स्वजन्मना संभूषिता तदा श्रीसीतास्वरूपेण नारीरत्नेन मिथिलाभिधाना नगरी संभूषितासीत् । यदा दुष्यंतरूपेण नररत्नेन समकारि राजन्वती भूमिस्तदा शकुंतलास्वरूपेण नारीरत्नेन भूरियं भूषिता । एवमनेकानि नररत्नानि नारीरत्नानि च विधिविधित्सयैवान्योन्यसमागमसुखान्यन्वभवन् । स्वयमपरिमितपरिश्रमेण निर्मितानि पृथक् पृथक् दूरदूरदेशेषु निक्षिप्तानि नारीरत्नानि नररत्नानि च संगतानि समीक्ष्य परमं परितोषमेति परमेष्ठीति मन्येहं । नारीरत्ननररत्नयोर्युगलं दंपतीशब्देनोच्यते । दंपतीभ्यां च परस्परं कया रीत्या वर्तितव्यमिति सीतारामचंद्रयोर्दमयंतीनलयोर्मदालसाऋतुध्वजयोः पवित्राणि चरित्राण्येव निवेदयंतीति केषामविदितं । तथैवेदानीमपि परमदयालोः पर-

मेश्वरस्य प्रसादात्–

वत्सोयं नररत्नमुत्तमतमं युष्मद्गृहे सत्यवान्
कन्यारत्नमनुत्तमं मम गृहे पुत्री च सावित्र्यसौ ।
माग्यैर्योग्यसमागमेन च तयोर्भूयादवंध्यश्रमः
स्रष्टेति प्रणतप्रियं प्रियतमं गौर्याः समभ्यर्थये ॥३९॥

वत्सावनन्यसदृसाविह दंपती तौ
भूत्वा स्वधर्ममनुपालयतां प्रमोदात् ।
श्रीजानकीरघुवराविव शुद्धबुद्धी
भैमीनलाविव च सांबशिवप्रसादात् ॥ ४० ॥

इयं मे परमेश्वरंप्रति परमा चरमाभ्यर्थना । ( इत्युक्त्वोपविशति । )

**मालवी**– ( समुत्थाय । ) आर्यपुत्रस्याज्ञानुसारेण वत्सयोः सावित्रीसत्यवतोः स्वयंवरमहोत्सवं समीक्षितुं समुत्कंठते स्वांतं मे ।

**शत्रुशल्यवीरमित्रौ**– महाराजस्य मतं निर्व्यलीकेन मनसानुमोदावहे ।

**द्युमत्सेनः**– (प्रहर्षप्रसरपरवशतया गद्गदकंठः ।) महाराजस्याश्वपतेर्निर्निमित्तं निष्प्रतिमं च प्रेमप्रसरं वर्णयितुं न मे प्रभवति प्रज्ञा रसज्ञा च ।

**शैब्या**– विरलाः किलैतादृशमित्रधर्मधुरंधरा धरायां धराधिपतयः ।

**अश्वपतिः**– यदि मन्मतमेवानुसरंति निर्विवादं सर्वेषां

मतयस्तर्हि शुभमयोऽयं समयो मंगलोऽयं मुहूर्तः कल्याणी चेयं वेला तदस्यां वत्सया सावित्र्या समर्पितां वत्सस्य सत्यवतो हृदये समुल्लसंतीं च स्वयंवरणमालां समालोकयितुं समुत्कंठते स्वांतं मे।

सावित्री– ( समुत्थाय करयोः स्वयंवरणमालां गृहीत्वा। ) यद्यपि मानसमुक्ताहारसमर्पणपूर्वं वृत एव मयाऽयं महाभागः प्रथमदर्शने परमिदानीं गुरुजनचतुष्टयसाक्षिकमग्निसाक्षिकमर्कसाक्षिकं च महाभागस्यास्य धर्मेष्वर्थेषु कामेषु च सहचरी भवितुमितः प्रभृति यावज्जीवमस्मिन्महाभागे मनसा वचसा कर्मणा च परमेश्वरनिर्विशेषशेमुषीका भविष्यामि तद्गुरुजनचरणपरिचर्यां तीर्थपरिचर्यानिर्विशेषां गणयिष्यामि प्राणार्पणप्रणयेनापि तदीयानि प्रियाणि हितान्याचरिष्यामि मदीयपितृचरणैरुक्तान् दंपतीधर्मांश्चाशेषानप्रमादेन पालयिष्यामीत्यादिप्रतिज्ञापूर्वमिमां स्वयंवरणमालामस्मै हृदयसर्वस्वाय प्राणप्रियायार्पयामि। (इत्युक्त्वा सत्यवत्कंठे स्वयंवरमालां निःक्षिपति।)

मालतीमाधव्यौ– ( पुष्पवृष्टिं कुरुतः। )

सत्यवान्– ( सलज्जमुत्थाय। ) महाराजस्याश्वपतेर्मूर्तामाज्ञामिवेमां स्वयंवरणमालां हृदि धारयामि। नैनां तां च कदापि विस्मरिष्यामि। दांपत्यधर्मपरिपालनविषयेपि महाराजवचनमेव मे प्रमाणम्। (इत्युक्त्वा सर्वेभ्यः सप्रणयं प्रणमति। )

**सर्वेपि**– वत्स ! प्रतिदिनं प्रवृद्धप्रतापो भूयाः ।
**सावित्री**– (सर्वेभ्यः प्रणमति ।)
**सर्वेपि**– वत्से ! निःसीमसौभाग्यसंपद्भव ।
**अश्वपतिः**– ( सहर्षाश्रं । ) आर्य राजर्षे ! परमेश्वरप्रसादादविघ्नेन पूर्णः स्वयंवरविधिः । अतःपरमाश्रमवासिनो ब्राह्मणान् समाहूय तद्द्वारा शेषं कृत्यं कारयिष्यंस्तेतास्तद्वयं स्वस्थानमेव गच्छामः ।
**द्युमत्सेनः**–यथा रोचते परममित्राय । (इत्युक्त्वोत्तिष्ठति ।)
**अश्वपतिः**– इतइत आर्य ! ( इति मार्गं प्रदर्शयन् द्युमत्सेनेन प्रधानाभ्यां च सहितो निष्क्रांतः । )
**मालवी**–एहि एहि देवि शैब्ये ! चंपकवनं गत्वा ब्राह्मणान् समाहूय तद्द्वारा लाजहोमं कारयामः ।
**शैब्या**– यथा रोचते प्रियसख्यै । ( इत्युक्त्वोत्तिष्ठति । )
**मालवी**– इत इत आर्ये ! (इति मार्गं प्रदर्शयंती साविञ्या मालतीमाधवीभ्यां च सह निष्क्रांता ।)

इति चतुर्थोंकः ॥

---

माहेश्वरात्मजनुपोर्द्धशशांकमौले-
र्दासस्य वर्यगुरुकेशवधर्मसूनोः ।
एषा कृतिर्मम जटाशिवमित्रमौले-
र्गौरीगिरीशचरणे कुसुमांजलिः स्तात् ॥ १ ॥

## ॥ अथ पंचमोंकः ॥

( ततः प्रविशति पटगृहमध्यस्थितो
मालव्या सह महाराजोऽश्वपतिः । )

अश्वपतिः– देवि ! अद्य वत्सायाः सावित्र्याः स्वयंवरवि-
धिरविघ्नेन पूर्ण इति प्रमोदमेति मानसं मे ।

मालवी– आर्यपुत्र ! आर्यायाः शैब्याया अमतिमां प्रीतिं
आर्यराजर्षेर्द्युमत्सेनस्याकार्त्रिमं स्नेहं वत्सस्य सत्यवतश्चा-
नेकान् सद्गुणान् विलोकयंत्या ममापि मनो महांतमानं-
दमनुभवति । परमाबाल्यतः प्राज्यराज्यसुखसंपत्प्रवृद्धा-
यै वत्सायै वनावनिरियं संरोचिष्यते नवेति दुरंता चिंता
न मत्स्वांतात्क्षणमप्यपसरति । यद्यपि नैसर्गिकप्रज्ञाप्रज्ञा-
ताशेषज्ञातव्यायै न किंचिदुपदेष्टव्यं संदेष्टव्यं वा तथापि
मातृभावसुलभा मृषा शंका मां तथा कर्तुं प्रेरयत्यतो-
स्मद्राजधानीगमनात्पूर्वं कश्चित्तस्यै सदुपदेशः समर्पणी-
यो येनावयोर्वियोगेपि नोद्विग्नहृदया सा भवेत् ।

अश्वपतिः– प्रिये ! विचक्षणा वत्सा सावित्री देव्या ता-
दृश एकस्मिन्नपि प्रोक्ते बोधवचने सद्यो न मदंतःकरण-
प्रत्ययो मातुर्ममेति विचार्य खिन्नचित्ता भविष्यति ।

मालवी–नाथ बोधं करिष्यामि तस्यै युक्त्या तथा तथा ।

यथा न तस्या मनसि क्लेशलेशोप्युदेष्यति ॥१॥

अश्वपतिः– एवंचेद्रोचते मे ।

मालवी– आर्यपुत्र ! तर्हि तद्विषयविचारकरणाय भवदाज्ञप्तमात्मानमिच्छामि ।

अश्वपतिः–गच्छतु देवी तद्विचारकरणायाहमपि चैतत्तपोवनतरुवरनिकरान्निरीक्ष्य नेत्रे कृतार्थयिष्यामि । (इत्युक्त्वा निष्क्रांतः ।)

मालवी– गतः प्राणनाथस्तपोवनशोभासमीक्षणाय तदहमपि रहसि गत्वा विचारयामि किमपि वत्सार्हं । ( इति निष्क्रांता ।)

( ततः प्रविशति पर्णशालोपविष्टः
शैव्यया सहितो द्युमत्सेनः । )

द्युमत्सेनः–प्रिये शैव्ये ! पूर्णः किं वत्सयोः सावित्रीसत्यवतोः पाणिग्रहणरूपो मांगल्यो विधिः ।

शैव्या– आर्य ! युष्मासु माधवीमंडपात्प्रस्थितेषु चंपकवनमागत्यास्माभिस्तपोधनाः समाहूताः । पठ्यमानेषु तैर्विवाहोचितेषु वैदिकेषु मंत्रेषु देव्या मालव्या साग्निसाक्षिकं समर्पितः पाणिर्वत्सायाः सावित्र्या वत्सस्य सत्यवतः पाणौ ।

द्युमत्सेनः– ततस्ततः ।

शैव्या– ततस्तैर्ब्राह्मणैः समाहूयतां सावित्र्या भ्राता न तं विना लाजहोमः कर्तुं शक्य इति ।

द्युमत्सेनः– (स्वगतं।) श्रुत्वैतद्ब्राह्मणानां वचनं सर्वेषां चित्तानि विषादविषाब्धिमग्नानि भविष्यंति। ततस्ततः।

शैब्या– ततः प्रोक्तं देव्या मालव्या अयि वंद्यास्तपोधनाः! मंदभागिनीयं दैवात्केवलमेतत्सुखानुभवस्यैवाभाजनमिति।

द्युमत्सेनः– प्रिये! मालव्या एनां वचनरचनां श्रुत्वा सर्वेषां स्वांतेषु केनाप्यन्यादृशेनैव विषादावेशेन भाव्यं।

शैब्या– अथ किं।

> नाभूत्तत्रेदृशी नारी यस्या नयनयोर्युगात्।
> न निःसृता अश्रुधारा निःश्वासाश्च मुखांबुजात् ॥२॥

द्युमत्सेनः– स्वभावसिद्धमेतत्सज्जनानां। ततस्ततः।

शैब्या– ततः प्रोवाच देवी मालवी। तपोधनाः! एतौ देवव्रतप्रज्ञावंतौ सावित्र्याः सत्यवत्प्रीतिगौरवात् भ्रातृनिर्विशेषाविवेति मन्ये ततस्ताभ्यामेव निखिलं भ्रातृकृत्यं संपादयंत्वत्र भवंतो भवंत इति।

द्युमत्सेनः– (सहर्षं।) सम्यग्विचारितं मालव्या। शोभते मन्मित्रमहिष्यास्तादृशमुदाराशयत्वं। ततस्ततः।

शैब्या– मालव्यास्तेन वचनेन सर्वासां स्वांतानि सानंदानि जातानि। तदनंतरं च देवव्रतप्रज्ञावद्भ्यां मिलित्वा कारितो लाजहोमः।

द्युमत्सेनः– तेन परितोषमाप्तं स्वांतं मे। क्वास्ति वत्सा सावित्री वत्सः सत्यवांश्च।

शैब्या– आश्रमेश्वरं तपोवनमुनींश्चाभिवंद्यावुनैव युष्मत्स-
मीपमेष्यति ।

( ततः प्रविशति सत्यवान् सावित्री च । )

सत्यवान्– आर्यावभिवंदेहं सत्यवान् ।

शैब्याद्युमत्सेनौ– वत्स ! दीर्घायुर्भव ।

सावित्री– आर्यावभिवंदेहं सावित्री ।

उभौ– वत्से ! अखंडां लभस्व सौभाग्यश्रियं ।

सावित्री– ( शैब्यां प्रति । ) आर्ये ! इतः प्रभृति यावज्जी-
वमियं वो दासीति मत्वा कंदमूलफलदलसमित्कुशकुसु-
मान्याहर्तुं अन्यानि च वल्कलप्रक्षालनादीनि कार्याणि
कर्तुं चाज्ञापनीयेति मे प्रार्थना ।

शैब्या– वत्से सावित्रि ! विवेको विनयश्च ते कोप्यद्भुत
एव । सति प्रसंगे वत्साया योग्यानि कार्याणि कथयि-
ष्यामि परं फलमूलदलाद्याहरणकार्यं न ते योग्यं ।

सावित्री–मातर्युष्मत्सपर्यायाः कार्याणि यानि कानिचित् ।
तानि सर्वाणि मे कर्तुं योग्यान्येवेति वेद्म्यहम् ॥३॥

शैब्या– वत्से सावित्री यदत्त्वं ब्रवीषि मधुराक्षरम् ।
तत्तत्कुलीनकन्यानां धर्महार्दमनुत्तमम् ॥ ४ ॥

शोभते चैतद्भवादृशीनां सत्कुलकामिनीनां चायमुपचारः
परं त्वयोपनीयमानानि दलफलमूलानि द्रष्टुमिच्छामि ।

सावित्री– मातः ! सर्वमेतद्भगवतीकृपावलोकनफलमेव परं
न यावन्मयिस्वपरिचर्यानियोगानुग्रहं करिष्यसि तावन्नाह-

आत्मानं कृतार्थं गणयिष्यामि।
शैव्या– वत्से! यद्येवमत्याग्रहस्ते तर्हि वदामि।
सावित्री– अवहितास्म्यहमेषा श्रोतुं तत्।
शैव्या– प्रत्यहं प्रातः सायं च शिवपूजनपात्राणि संमार्जनीयानि शिवपूजनाय पुष्पाणि बाललताभ्योऽवचेतव्यानि शिवपूजनाय जलं चास्मात्संन्निहिताद्वृक्षकुंडात्समानेतव्यमिति वत्साया योग्यानि कार्याणि मन्ये।
सावित्री– आर्ये! सर्वमेतद्युष्मदाज्ञानुसारेण निष्प्रमादं करिष्यामि। समाज्ञाप्यतामन्यदपि।
शैव्या– पुत्रि! ततः परं सर्वा बाललता बालवृक्षाश्च परिषिंचनीयाः कमंडलूद्धृतेन सलिलेन।
सावित्री– यथाज्ञा आर्यायाः। (इत्युक्त्वा सर्वं यथाक्रमं यथोपदेशं च विधाय बाललताः सिंचति।)
(ततः प्रविशति मालवीप्रेषिता मालती माधवी च।)
मालती– हला माधवि! आवयोरेषा प्रियसखी सोत्साहमेव तरुवरान् कोमलकरकमलकलितकमंडलुसलिलेनाभिषिंचति तदेहि पश्यावः।
सावित्री– (विश्रामाय क्षणं तरुतले समुपविश्य।)

सिक्तो बिल्वस्तदनु तुलसी बाल आम्रोथ नीपः
सिक्ताः सर्वाः कुसुमलतिका जातियूथिप्रमुख्याः।
सिक्ता चेयं बकुललतिका नागपुन्नागयुक्ता
संभाव्या मे परमियमसौ मालती माधवी च॥ ५॥

**मालतीमाधव्यौ**– (प्रविश्य।) प्रियसखि सावित्रि! सत्यं। सांप्रतमावामेव त्वया संभाव्ये स्वः।

**सावित्री**– (साश्चर्यानंदं।) अहो सखि मालति! सखि माधवि! किं युवामप्यत्रागते। यथा दयार्द्रया मात्रा मालव्या मन्मनोविनोदाय युवां प्रियसख्यौ समर्पिते तथात्र दयार्द्रया मात्रा शैब्यया एते मालतीमाधव्यौ समर्पिते स्तः। (इति लताद्वयं दर्शयति।)

**माधवी**– हला सावित्रि! त्वया मालवीनिर्विशेषं मानिता देवी शैब्या मातरं मालवीं समनुकुर्यादिति न चित्रं।

**सावित्री**– किमर्थमत्रागमनं कृतं मालति माधवि!
वदतं वां समायोगान्ममाजनि महत्सुखम्॥६॥

**मालती**– सखि! समाज्ञप्ते स्वो मात्रा मालव्या देवीं शैब्यां विज्ञाप्य मद्वचसा प्रणामपूर्वमनंतरं तदाज्ञया वत्सां सावित्रीं त्वरयेहानयतमिति।

**सावित्री**– तर्हि युवामंतःपर्णशालां गत्वा निवेदयतं मातृसंदेशं मच्छ्वश्रूभ्यः। अहमप्येनां स्थलकमलिनीं परिषिच्य तत्रागमिष्यामि।

**मालतीमाधव्यौ**– यथाज्ञा भर्तृदारिकायाः। (इत्युक्त्वा पर्णशालायां गत्वा नत्वा च देवीं शैब्यां।) आर्ये देवि! इच्छतीदानीं सावित्रीमुखदर्शनं वः प्रियसखी मालवी।

**शैब्या**– किं वत्सायाः सावित्र्याः प्रियसख्यौ समागते।

माधवी– अथ किं । कृपया समाज्ञापयंतु प्रियसखी नौ तत्रा-
गंतुम् ।
शैव्या– वत्से सावित्रि !
सावित्री– एषास्मि । समाज्ञापयतु माता ।
शैव्या– पुत्रि ! मालतीमाधवीभ्यां सह देव्या मालव्याः
समीपे गंतव्यं वत्सया । वक्तव्या च मत्प्रणामार्पणपूर्वं
सा त्वत्समागमामृतसमास्वादेन न तृप्तं स्वांतं शैव्या-
या इति ।
सावित्री– यथाज्ञाश्वश्रूचरणानां । ( इत्युक्त्वा सह सखी-
भ्यां निष्क्रांता । )
( ततः प्रविशति देव्या मालव्या सहितोश्वपतिः । )
अश्वपतिः– कः कोत्र भोः ।
द्वारपालः– आज्ञापयतु देवः ।
अश्वपतिः– समाहूय प्रधानौ ।
द्वारपालः– यथाज्ञा देवस्य । ( इति निष्क्रम्य पुनः प्रधाना-
भ्यां सह प्रविश्य । ) देव ! प्रधानावेतौ । ( इति निर्दि-
शति । )
शत्रुशल्यः– जयतु जयतु देवो देवी च ।
अश्वपतिः– इहोपविश्यतां ।
वीरमित्रः– जयतु जयतु देवो देवी च ।
अश्वपतिः– इहोपविश्यतां ।
प्रधानौ– ( उपविश्य सांजलिबंधौ । ) देव ! कं निदेशं

कर्तुं स्मृतिपथमागतौ किंकरावेताविति ज्ञातुमुत्कंठावहे।
**अश्वपतिः**—अद्य देव्या निर्मितस्याभिनवस्य कस्यापि नाटकस्याभिनयो भविष्यति तदवलोकनाय समाहूतौ युवां।
**शत्रुशल्य-वीरमित्रौ**—महानयमनुग्रहः।
**मालवी**—वत्सां सावित्रीं समानेतुं प्रेषिते मया मालतीमाधव्यौ कथमद्यापि सह सावित्र्या न समागते ते।
**सावित्री**—(सखीभ्यां सह प्रविश्य।) पितरौ! प्रणमामि सावित्री।
**मालवी**—निरतिशयं सुखमनुभूयाः।
**अश्वपतिः**—समुल्लसंतु ते श्रेयःपरंपराः।
**सावित्री**—मातः श्वश्रूभिर्मे प्रणामपूर्वमिदं संदिष्टं।

मर्त्योऽमृतं यथास्वाद्य न तृप्तिमधिगच्छति।
तथा त्वत्संगमास्वाद्य मानसं मम मालवि ॥ ७ ॥ इति।

**मालवी**—पुत्रि! ममापि तत्संगमातृप्तमेवांतःकरणं।
**सावित्री**—मातः! किमर्थमस्मिन् समये समाहूतास्मि। यदि नैसर्गिकेन वात्सल्येन मुखदर्शनायैव समाहूता तर्हि संपन्नं मे युष्माकं दर्शनमिदानीमाज्ञाचेद्गच्छाम्यंधौ वृद्धौ च मे श्वश्रूश्वशुरौ संसेवितुं।
**मालवी**—वत्से! किं जन्मदौ पितरौ प्रति तु परित्यक्तमेव प्रेम!
**सावित्री**—अयि जननि कदाचिन्नैवमाशंकनीयं

कथमिव पितरौ स्वौ विस्मरेद्वा जनोयम् ।
निरुपमतममस्मिन् वत्सलत्वं यदीयं
किमपि जगति जागरुकद्भुतं निर्निमित्तम् ॥८॥

परं किं करोमि युष्मदुक्तः श्वश्रूश्वशुरसेवास्वरूपो धर्म एव मामितस्त्वरया तत्र गंतुं प्रेरयति ।

मालवी– वत्से ! तथाऽप्रमादेन श्वश्रूश्वशुरसेवामेवाचरंतीं त्वयि प्रमोदामहे । परमिदानीमत्र कस्यचित्प्रेक्षणकस्य प्रयोगो भविष्यति तत्प्रेक्षणाय समाहूता वत्सा तद्विलोक्य प्रातरेव तत्र गंतव्यम् ।

सावित्री– मातर्युष्मदाज्ञावशवृत्तिरेवायं जनः । परं केनचित्सह तत्र संदेशितव्यं यदत्रैव रात्रिमतिवाहयिष्यति सावित्रीति येन न ते मच्चिंतयातुरा भवेयुः । (इत्युक्त्वा मालवीसमीपमुपविशति ।)

मालवी– प्रतीहार ! आर्यराजर्षिद्युमत्सेनस्याश्रमं गत्वा मद्वचसा वक्तव्या महादेवी शैब्या यदत्रैव रात्रौ स्थास्यति सावित्रीति ।

प्रतीहारः– यथाज्ञापयति देवी । (इति निष्क्रांतः ।)

मालवी– प्रस्तूयतामभिनयः ।

सूत्रधारः– (प्रविश्य ।) जयतु जयतु गौरीप्राणनाथः परेश-
स्तदनु जयतु धर्मो निर्मलोऽयं सतीनाम् ।
तदनु च विजयंतां शक्तयः सत्कवीनां
भवतु च विजयोऽस्मिन् भूतले भूपतीनाम् ॥ १ ॥

शत्रुशल्यः–( प्रबद्धांजलिः समुत्थाय । ) यदि क्षमिष्यति महाराज एकमविवेकं तर्हि सेवकपरमाणुरयं किमपि प्रार्थयितुमिच्छति ।

अश्वपतिः– यथेच्छं विज्ञाप्यतां विज्ञापनीयं ।

शत्रुशल्यः– देव ! नेदमस्मद्राजरीत्यनुरूपं यदयमप्रसारितजवनिकेऽवरोधजने प्रविशति सूत्रधारः ।

अश्वपतिः– ( किंचित्प्रहस्य । ) आर्य शत्रुशल्य ! युक्तमुक्तं भवद्भिः । धर्म एवायं भवतां यद्राजरीतौ प्रमादात्त्वस्मासु सदुपदेशेन प्रार्थनया वा निष्प्रमादा विधेया वयमिति । परमयं न मे प्रमादः किंतु पुत्र्या सावित्र्या सह देशाटनाय प्रस्थितेषु युष्मासु सावित्रीवियोगखिन्नां देवीं मालवीं विनोदयितुं निपुणतरेभ्यो नाटककारेभ्योऽध्यापिता अभिनवविद्यामप्सरसस्तासां मध्यादेकेयं सूत्रधारस्वरूपेण समागतास्ति । किंचातःपरमपि ये येऽस्मिन्प्रेक्षणके पुरुषाः समागच्छेयुस्तेपि पुंस्वरूपा अप्सरस एवैता इति मंतव्यमार्येण ।

शत्रुशल्यः– ( साश्चर्यानंदं । ) देव । किमिदं सूत्रधारस्वरूपमप्सरोरत्नं । कः प्रत्येति नायं पुरुष इति । इदानीमुभयथा संतुष्टं मे स्वांतं महाराजकृतेनाप्सरोभ्योभिनवविद्यादानेनाप्सरसां चाप्रतिमेन तद्विद्यावैशारद्येन ।

वीरमित्रः–देव ! युक्तमाहार्यः शत्रुशल्यः । प्रथमं ममापि शत्रुशल्यस्येव बुद्धिरभवदेवं विज्ञप्तुं सोयं प्रभावोभिनवा-

भिनयविधानैपुण्यस्य।

अश्वपतिः–चित्ते चमत्कृतिं धत्ते वीक्षिता या न वीक्षताम्।
कला कलावतां सा किं विकलान्मत्ववोधिनी ॥ ९ ॥

सूत्रधारः– प्रिये! इतस्तावत्।

नटी– प्राणनाथ! एषास्म्याज्ञापयतु।

सूत्रधारः–अभिनवनाटकावलोकनोत्कंठितानां सामाजिकानां रंजय मानसानि संगीतेन।

नटी– नाथ! कं प्रसंगमाश्रित्य गायामि।

सूत्रधारः– कुलीनकन्यास्तवप्रस्तावमाश्रित्य गीयतां।

नटी– तथा। (इति गायति।)

या गेहं स्वपितुः स्वकीयजनुषा संशोभयित्वा तत-
श्चांधं वा जरसाभिभूतमथवा क्रोधाकुलं स्वं पतिम्।
सेवेतीश्वरचेतसा पतिगृहे या श्रीरिवातिस्थिरा
सा पुण्येन विना भवेन्नु सुलभा धन्या सुकन्यात्र किम्॥२॥

नेपथ्ये– यथाह सूत्रधारसीमंतिनी। अपुण्यवतां दुर्लभा हि सुकन्या। नैवंचेत्कथमस्माकं हस्ताद्गता सा।

सूत्रधारः– प्रिये! स्वरोयं कयोरपि राजकन्याप्रियसख्योरिव प्रतिभाति। यत्र यत्र राजकीयो जनो भवेत्तत्र तत्र विनाप्रयोजनं न स्थेयमिति नीतिस्तदेहीतरत्र गच्छावः। (इति नटया सह निष्क्रांतः।)

(ततः प्रविशतो ललितालीलावत्यौ।)

ललिता– हाहंतास्माकमपुण्यवत्तयैव न सुलभा सुकन्या
अन्विष्यान्विष्य तां श्रांतास्म्यहं हा क्वापिनास्ति सा ।
लीलावती– निधिसंपदिवाभाग्यैरिहस्था वीक्ष्यते न वा ॥ ३ ॥
सावित्री– मातः ! इमे कस्मा अपि प्रियसख्या वियोगवि-
ह्वले स्तः ।
मालवी– अथ किम् ।
शत्रुशल्यः– वीरमित्र ! कस्यायमाश्रम इत्यभिज्ञायते ।
वीरमित्रः– आर्य ! च्यवनमुनेरयमाश्रम इत्यनुमानं मे ।
लीलावती– हला ललिते ! दृष्टास्त्वया पितृचरणाः सुकन्या
क्व गतेति ।
ललिता– न मया दृष्टाः किंतु मातृभिरेव पृष्टाः ।
लीलावती– तर्हि तैः किमुत्तरं दत्तं ।
ललिता–आश्रमशोभां विलोकयितुं गच्छामीत्युक्त्वा गतास्तीति ।
लीलावती– आम्राणां वनमवलोकितं मया हा

कादंबी प्रियसखि वीक्षिता च वीथिः ।
नीरंध्रावलि कदलीवनं च दृष्टं
न क्वापि प्रणयवतीक्षिता सुकन्या ॥ ४ ॥

ललिता– प्रियसखि तटिनीतटांतरूढा-
न्यपि निखिलानि वनानि वीक्षितानि ।
नयमयनयना मयातिधन्या
क्वचिदपि नैव विलोकिता सुकन्या ॥ ५ ॥

लीलावती– ललिते ! योयमतिदूरे निर्गलिताकाशप्रदेशशंकाप्रदो ग़दो विलोक्यते तत्समीपतरतरुनिकुंजे नाहं गता न च त्वं । तदेहि तत्र गच्छावः । ( इति निष्क्रांते । )

( ततः प्रविशत्युद्विग्नचित्ता सुकन्या । )

सुकन्या– ( परितो विलोक्य दीर्घं निःश्वस्य च । )

संतापो भवति हि यो विना निमित्तं
संत्रासो मनसि च यश्च यो विषादः ।
तैर्मन्ये स्म्यहमिह कस्यचिन्महर्षेः
संजाता दृढमपराधिनीत्यवश्यम् ॥ ६ ॥

पठंतु शास्त्राणि भजंतु सद्गुरून्
विदंतु वेद्यान्यखिलानि वा सुखम् ।
परं वयोलभ्यमहो विना वयो
न लभ्यते ज्ञानमिति स्म मे मतिः ॥ ७ ॥

सत्यं ममैव मूर्खता मामेव धिक्कारयति । प्रथमं तु मातृचरणानां रथादुत्तीर्य पितृचरणैः सह किमर्थमश्वारूढया मूढया मयानुद्रुतं । ततः संप्राप्याश्रमप्रदेशं विहाय पितृचरणपरिचर्यां न प्रतीक्ष्य च मातुरथागमनं किमर्थं वनमेतद्द्रष्टुमुत्सुकतराहमभवं । विजने घने चास्मिन् वने लतामंडपान् निकुंजान्छायावृक्षांश्चानेकानुल्लंघ्य किमर्थमेतावतीं महीमहं ग्रहग्रहीतेवागता । एतावतीमतिदूरवर्तिनीं वसुमतीमतिक्रम्यागच्छंत्या अपि न मे मनस्येतदागतं यदहमस्म्येकाकिनी दूरे च मे पितृचरणसनोसं-

निवेशः अदृष्टपूर्वेण चामुनाध्वना कथमिव प्रतिनिवृत्य पितृसेनासन्निवेशप्रदेशमनुगमिष्यामि मातरो मे मद्गतचिंतातरंगिणीतरंगमग्नचित्ता भविष्यंति पितृचरणानां च मामन्वेष्टुं वनाद्वनं परिभ्रमतामतिपरिश्रमो भविष्यति किंच यदि कश्चित्क्रूरः श्वापदोभ्यापतिष्यति तर्हि निष्कवचा निरायुधा च किंकरिष्यामीति । नैतदखिलमल्पाया बालबुद्धेर्विलसितं । तत्रापि कंटकद्वयेनैतद्वल्मीकगताच्छिद्रद्वयभेदनसाहसं स्वीकृत्य मयैव मे मूर्खताया अवधिर्बालबुद्धितायाः सीमांतरेखा यत्किंचित्कारितायाश्च पराकाष्ठा प्रदर्शिता ।

अश्वपतिः– प्रिये ! उत्तमतमेयं ते रचना ।

मालवी– प्राणनाथ ! सर्वमेतद्भवत्कृपावलोकविलसितं ।

सावित्री– मातरभिनवैवेयं विलोक्यते रचना ।

प्रधानौ– ( परस्परं । ) अहो प्रेक्षणकमिदं प्रेक्षतां कश्चिदन्यादृश एव रस आविर्भवति ।

सुकन्या– हा हंत हंत विहितं शुभकर्म नैतत्

सर्वं विनाशमुपयास्यति मे ऽमुनैव ।
लीलावती न ललितापि च सन्निधौ मे
कस्यै स्वदुःखमिदमत्र निवेदयामि ॥ ८ ॥

( इति विलपंती मूर्छामभिनयति । )

( ततः प्रविशति संभ्रमाल्लीलावती ललिता च । )

लीलावती– ( विलोक्य । ) अहो किमियं सुकन्यैव । हला सुक-

न्ये! सुकन्ये! (इति प्रबोधयति।)

ललिता– (विलोक्य।) हंत मूर्छितैवेयं।

लीलावती– तर्हि किं करिष्यावः।

ललिता– सखि! पलाशपत्रपुटेन नदादस्मात्सलिलमानीयतां। (इत्युक्त्वा सुकन्यां स्वांके स्थापयति।)

लीलावती– (सत्वरं सलिलमानीय ललितायै समर्पयति।)

ललिता– (सुकन्यायाः शिरसि ललाटे च सलिलं सिंचति।)

लीलावती– (कदलीदलेन वीजयति।)

सुकन्या– (प्रबुध्य।) हा हंत हंत विहितं शुभकर्म नैतत्

सर्वं विनाशमुपयास्यति मेऽधुनैव।
लीलावती न ललितापि च सन्निधौ मे
कस्यै स्वदुःखमिदमत्र निवेदयामि ॥ ९ ॥

ललिता– हला सुकन्ये! अहं लीलावती चात्रैव ते संनिधौ स्थिते स्वः।

सुकन्या– (साश्चर्यं नेत्रे समुन्मील्य।) प्रियसख्यौ! किं युवामत्रागते स्थः।

लीलावती– अथ किं। परं किं निदानमीदृशाद्दुर्देशायास्ते इति ज्ञातुमिच्छावः।

सुकन्या– प्रियसख्यौ! कर्मैव मे।

ललिता–पुण्यतममेव प्रियसख्यास्तद्येनोपलब्धं महाराजगृहे जन्म।

सुकन्या– नहि नह्यैहिकमेव मे कर्म।

निवेशः अदृष्टपूर्वेण चामुनाध्वना कथमिव प्रतिनिवृत्य पितृसेनासन्निवेशप्रदेशमनुगमिष्यामि मातरो मे मद्वृत्तचिंतातरंगिणीतरंगमग्नचित्ता भविष्यंति पितृचरणानां च मामन्वेष्टुं वनाद्वनं परिभ्रमतामतिपरिश्रमो भविष्यति किंच यदि कश्चित्क्रूरः श्वापदोऽभ्यापतिष्यति तर्हि निष्कपचा निरायुधा च किं करिष्यामीति । नैतदखिलमल्पाया बालबुद्धेर्विलसितं । तत्रापि कंटकद्वयेनैतद्वल्मीकगताच्छिद्रद्वयभेदनसाहसं स्वीकृत्य मयैव मे मूर्खताया अवधिर्बालबुद्धितायाः सीमांतरेखा यत्किंचित्कारितायाश्च पराकाष्ठा प्रदर्शिता ।

**अश्वपतिः**– प्रिये ! उत्तमतमेयं ते रचना ।

**मालवी**– प्राणनाथ ! सर्वमेतद्भवत्कृपावलोकविलसितं ।

**सावित्री**– मातरभिनवैवेयं विलोक्यते रचना ।

**प्रधानौ**– ( परस्परं । ) अहो प्रेक्षणकमिदं प्रेक्षतां कश्चिदन्यादृश एव रस आविर्भवति ।

**सुकन्या**– हा हंत हंत विहितं शुभकर्म नैतत्

सर्वं विनाशमुपयास्यति मे ऽमुनैव ।
लीलावती न ललितापि च सन्निधौ मे
कस्यै स्वदुःखमिदमत्र निवेदयामि ॥ ८ ॥
( इति विलपंती मूर्छामभिनयति । )
( ततः प्रविशति संभ्रमाल्लीलावती ललिता च । )

**लीलावती**–( विलोक्य । ) अहो किमियं सुकन्यैव ! हला सुक-

न्ये ! सुकन्ये ! ( इति प्रबोधयति । )

ललिता– ( विलोक्य । ) हंत मूर्छितैवेयं ।

लीलावती– तर्हि किं करिष्यावः ।

ललिता– सखि ! पलाशपत्रपुटेन नदादस्मात्सलिलमानीयतां । ( इत्युक्त्वा सुकन्यां स्वांके स्थापयति । )

लीलावती– ( सत्वरं सलिलमानीय ललितायै समर्पयति । )

ललिता– ( सुकन्यायाः शिरसि ललाटे च सलिलं सिंचति । )

लीलावती– ( कदलीदलेन वीजयति । )

सुकन्या– ( प्रबुध्य । ) हा हंत हंत विहितं शुभकर्म नैतत्

> सर्वं विनाशमुपयास्यति मेऽमुनैव ।
> लीलावती न ललितापि च सन्निधौ मे
> कस्यै स्वदुःखमिदमत्र निवेदयामि ॥ ९ ॥

ललिता– हला सुकन्ये ! अहं लीलावती चात्रैव ते संन्निधौ स्थिते स्वः ।

सुकन्या– ( साश्चर्यं नेत्रे समुन्मील्य । ) प्रियसख्यौ ! किं युवामत्रागते स्थः ।

लीलावती– अथ किं । परं किं निदानमीदृशाद्दुर्दशायास्ते इति ज्ञातुमिच्छावः ।

सुकन्या– प्रियसख्यौ ! कर्मैव मे ।

ललिता–पुण्यतममेव प्रियसख्यास्तद्येनोपलब्धं महाराजगृहे जन्म।

सुकन्या– नहि नहैहिकमेव मे कर्म ।

लीलावती– नावाभ्यां गंभीरतरं वचस्तेवगम्यते तत्स्फुटं कथय।

सुकन्या– प्रियसख्यौ! पितृपादैः सह समागत्याहमाश्रमपदमेतत् सत्वरतरं प्राचलं वनशोभाविलोकनाय। परितो घनानि वनानि मनोज्ञांल्लतामंडपान् परिणतफलभरनणतांस्तरुपंक्तीश्च विलोकयंती शनैः शनैः समासदं प्रशांतश्वापदं पदमेतत्। (अंगुल्या वल्मीकं दर्शयंती।) अत्र चास्मिन्वल्मीके ज्योतिष्मच्छिद्रद्वयमेतद्विलोक्य मूर्खतया बाल्यतया भाविप्राबल्येन च कंटकाभ्यां निर्भिन्नं तत् यत एता मदीयमंदभाग्यविजयविख्यापनमबद्धाग्रहाः प्रशस्तिपंक्तय इव निखिलकल्याणकल्पतरुमूलोन्मूलननिबद्धपरिकरा अकल्याणकल्लोलिन्य इव मदीयाशेषपरिवारमाणपानोद्यताः पन्नगिन्य इव च निष्पतंति निर्विरामं विकराला रुधिरधाराः।

लीलावती– ततः कस्ते पराभवः।

सुकन्या– न केवलं ममैव किंतु निखिलस्यापि कुटुंबस्य मे भविता पराभवः।

ललिता– हला सुकन्ये! कंटकाभ्यां विद्धयमाने छिद्रद्वये केनापि किंचित्प्रोक्तम्।

सुकन्या– नहि नहि।

लीलावती– एहि तर्हि वृत्तांतमेतत्पितृचरणेभ्यो निवेदयामः।

सुकन्या– प्रियसख्यौ! वल्मीकात्कथं रुधिरधारा निष्पततीति निश्चयमकृत्वा नाहं पितृचरणसमीपमुपगंतुमीहे।

ललिता– तर्हि किं करिष्यामः।

**सुकन्या–** वल्मीके किमस्तीति तिस्रोपि वयं संमिल्य मृत्तिका-निचयमपाकृत्य च विलोकयिष्यामः ।

**सख्यौ–** भवत्वेवं कुर्वः । ( इत्युक्त्वा मृत्तिकामपाकुर्वंति । )

**ललिता–** ( वल्मीकमध्यान्निर्गतमस्थिपंजरं विलोक्य । ) प्रियसखि ! न भेतव्यं न भेतव्यं । पुरास्मासु वैद्यशास्त्राभ्यासं कुर्वाणास्वस्माकं सद्गुरुभिः शारीरकज्ञानाय यदस्थिपंजरं प्रदर्शितमासीत्तादृशमेतदप्यस्थिपंजरं विलोक्यते ।

**लीलावती–** यद्येवं तर्हि न किंचिद्भयमिदानीं नः ।

**सुकन्या–** ( सुचिरं निर्वर्ण्य स्वगतं । )

> शुभ्रश्मश्रूजटाजालभ्रुकुटीपक्ष्मशालिनी ।
> दृद्धावस्थैव मूर्त्तेयं किं तपः कर्तुमागता ॥ १० ॥

( प्रकाशम् । ) प्रियसख्यौ ! अयं कश्चिन्महामुनिर्नूनं । परमतपःप्रविष्टनिष्ठस्य पिपीलिकपरिपीतासृङ्मांसमेदोमज्जस्य चास्य केवलं प्राणा अस्थिष्वेव शेरते इति श्वासोच्छ्वासा एव निवेदयंति । चक्षुर्भेदनवेदनयैव ध्रुवमयं मूर्छित इति प्रतिभाति ।

**ललिता–** ( अस्थिपंजरं निपुणं निर्वर्ण्य । ) युक्तैवोक्तिः प्रियसख्याः समुल्लसति श्वासोस्मिन्नस्थिपंजर इतीदानीं ममापि प्रतिभाति ।

**सावित्री–** मातः ! सुकन्यायास्तायुर्वेदेपि विदग्धबुद्धिरस्तीति ज्ञायते ।

मालवी– पुत्रि! पूर्वं त्वादृश्यो राजपुत्र्यः समकुर्वन् सर्वा-
स्वप्यनवद्यास्वतिहृद्यासु विद्यासु निरतिशयं प्रणयं।
सुकन्या– हला ललिते!

आयुर्वेदीयहार्दज्ञं वैद्यवर्यमिहानय।
पितृपादाज्ञया यन्मे जीविताशाद्य तद्दशा॥ ११॥

ललिता– यथाज्ञा प्रियसख्याः। (इति निष्क्रांता।)
सुकन्या– हला लीलावति! त्वयामुष्मादतिविशदान्नदात्को-
मलानि कमलानि मुनेरस्य शयनाय समानेयानि।
लीलावती– यथाज्ञा भर्तृदारिकायाः। (इति निष्क्रांता।)
सुकन्या– (स्वगतं।) गते ललितालीलावत्याविदानीमहमपि
महामुनेरस्य मूर्छापनयनाय चंदनपल्लवान्यानयामि। (इत्यु-
क्त्वा निष्क्रामति।)

(ततः प्रविशति मूत्रकृच्छ्रव्याधिपीडितो राजा शर्यातिर्देवी
सुशीला च।)

शर्यातिः– प्रिये! क्षणमात्रेणापि मद्दर्शितमेतत्पतिपरानपथ्यानया
व्यथया मन्ये न चिरं स्थास्यंत्यमी मे प्राणा इति।
सुशीला– प्राणनाथ! ग्रस्ताहमपि तेनैव साधिना व्याधिना।
वैद्यराजोऽपि समर्प्याशाभ्यामौषधं गतः प्रधानावमोचनं।
शर्यातिः– कथमद्यापि नागतः सर्वैद्यराजस्तत्प्रदत्तौषधपरिशील-
नपरिणामस्तु न कश्चिदद्याप्यनुभूयते।

(ततः प्रविश्य सानतो वैद्यः।)

वैद्यः–जयतु जयतु महाराजः।

शर्यातिः— अहो वैद्यराजेन स्मरणसमकालमेव समागतं। उच्यतां का स्थितिरिदानीं प्रधानस्येति।

वैद्यः—महाराज! दैवदत्तदैन्यस्य सकलस्यापि सैन्यस्य का स्थितिरिति प्रष्टव्यं।

शर्यातिः— (साश्चर्य।) किं सकलमपि सैन्यं तयैव पीड्यते पीडया।

वैद्यः— अथ किम्। ममापि वपुषि सव व्यथा कथापथातीतानि दुःखान्युत्पादयति।

शर्यातिः— नास्ति कोपि तस्याः प्रतीकारः।

वैद्यः— महाराज! संत्येव बहवः प्रतीकाराः परं वामे विधौ किं-विधेयं। श्रूयताम्।

पूर्वं लेहकपायकल्कगुटिका लेपाः क्रमेणार्पिताः
पश्चाच्चंद्रकलामृताहिमयुता चंद्रप्रभाप्यर्पिता।
ये येन्येपि च मूत्रकृच्छ्रदलनास्ते तेपि दत्ता रसा
हा सैन्येप्यखिले व्यथा नहि तथाप्येषा गता कस्यचित्॥१२॥

हतोपायस्ततो मन्ये दुर्लंघ्यां वेधसो गतिम्।
नूनं विधिविधित्सायाश्चिकित्सा नास्ति भूतले॥ १३॥

शर्यातिः— अथ किम्। एकस्मिन्नेव समये एकयैव पीडया सर्वेषामेव पराभवो न विनाविधिकोपावेगं भाव्यः। किंचायुर्वेदपारावारपारदृश्वनां भवादृशामपि यत्राकिंचित्करः प्रज्ञाप्रसरस्तत्र जीविताशापि निष्फलैव। तदतः परं केवलमाशासे वत्सायाः सुकन्याया मुखदर्शनसुखम्।

सुशीला– मया प्रेषितास्ति लीलावती वत्सां सुकन्यां समाह्वयितुं परं नाद्यापि सा समागता ।

अश्वपतिः– अयि शत्रुशल्यवीरमित्रौ ! पुरा पुरातनानां पृथ्वीपतीनां मध्येपि कीदृशान्यकस्मादतर्कितानि दुःखान्यन्वभवन्नित्येतद्विषयकमेतन्निदर्शनम् ।

प्रधानौ– महाराज ! तादृशानां महात्मनां सच्चरितान्येव विपत्पयोधौ निमज्जतां धैर्यस्थैर्यकराणि भवंति ।

सावित्री–मातः ! सुकन्या तु तावदस्थिपंजरावशेषितयैव व्याकुलचित्ता वृत्तांतमेनं श्रुत्वा कां दशामनुभविष्यतीति न बोधपदवीमवतरति बुद्धिर्मे ।

मालती– वत्से ! विपत्प्रहारसहा एव महाशया इति नाविदितं ते । प्रायो महात्मस्वेवापतंति विपदो नामहात्मसु । विपत्स्वनुद्विग्नता संपत्स्वनुच्छृंखलता च लक्षणं महात्मनां ।

लीलावती– ( स्वगतं । ) यद्यपि वैद्यराजमेव समाह्वयितुं प्रेषितास्म्यहं प्रियसख्या परमत्र वैद्यराजसमाश्वासनमात्राधारजीवनं सकलमपि सैन्यं तन्न किंचित्तद्विषये वक्तुमुचितं मे । ( प्रकाशम् । ) अयि पितरौ ! एषास्म्यहं । प्रियसखी मे सुकन्या तु इतो विदूरे वटतरुतले ललितया सहोपविष्टा शीतलतरातिधीरसरःसमीरपरिशीलनेन निकुंजचक्रचंक्रमणश्रममपनयतीति निवेदयितुमागताहं ।

सुशीला– वत्से ! स्वागतं ते त्वरितं पुनर्गच्छ वत्सायाः समीपे ।

गत्वा च वक्तव्यं मद्वचसा वत्सायै यन्माता च पिता च सैन्यं च ते सर्वे मुहूर्तमात्रप्राघुणिकप्राणं वर्तते तत्त्वरया समागत्य चरमसमागमसुखमनुभावयिष्यसीति ।

लीलावती— यथाज्ञा मातृणा । ( इति सत्वरं निष्क्रामति । )

वैद्यः— अहमपि ग्रंथांतरान् विलोक्योपायांतरमन्वेषयामि । ( इत्युक्त्वा निष्क्रांतः । )

शर्यातिः—प्रिये ! एहि आवामप्याकस्मिकमहापत्प्रशांतये विश्वापद्बंधुं दयासिंधुं पार्वतीप्राणबंधुं प्रार्थयावहे । ( इत्युक्त्वा देव्या सह निष्क्रांतः । )

( ततः प्रविशति सुकन्याललिताभ्यामुपास्यमानश्च्यवनः । )

सुकन्या— ( च्यवनमुनेरस्थिपंजरं चंदनपल्लवरसेन सिंचंती कदलीदलेन वीजयंती चेश्वरप्रार्थनां कुरुते । )

स्मरहर हर कालकाल मृत्युंजय जय बालतया मयापराधः ।
अयमिह विहितो विलोक्य नैनं मुनिवरमेनमपव्यथं विधेहि ॥
भवति कुतनयो नयोज्झितात्मा भवति कदाचिदपीह नो कुमाता ।
इति मनसि विचार्य विश्वबंधो मुनिवरमेनमपव्यथं विधेहि ॥
उदरगतनिजार्भकाहताम्बा क्वचिदपि कुप्यति नो यथा तथा त्वम् ।
मनसि न विगणय्य विश्वबंधो मुनिवरमेनमपव्यथं विधेहि ॥
अयि भव न भवत्परा परा मे जगति गतिः सचराचरे परात्मन् ।
नहि परमवलंबनं च तस्मान्मुनिवरमेनमपव्यथं विधेहि ॥
फलतु मदवरोपिता मयीयं त्वमृदुलकल्मषकालकूटवल्ली ।
तदहमिह सहे महेश्वर त्वं मुनिवरमेनमपव्यथं विधेहि ॥

बहव इह परं सुखं प्रयाताः शतश उपायगुरुर्वरावरस्त्वम् ।
भव तव दयया यया तया त्वं मुनिवरमेनमपव्ययं विधेहि ॥
अपि जडमतयः सहस्रशोपि त्रिदशगुरुप्रतिमा नरा बभूवुः ।
सदय यदवलोकनात्स च त्वं मुनिवरमेनमपव्ययं विधेहि ॥
अयि शिव शतशोल्पकायुषोन्ये रुचिरचिरंचिचिरायुषः समासन् ।
यदनुसरण आशुतोष स त्वं मुनिवरमेनमपव्ययं विधेहि ॥
निरवधिविविधाधयोपि चान्ये गलितसमस्तदुराधयो बभूवुः ।
शिवद शिव यदाश्रयात्स च त्वं मुनिवरमेनमपव्ययं विधेहि ॥
अगणितपरितापपापशापा अपि दलिताखिलतापपापशापाः ।
सपदि यदवलंबनाः स च त्वं मुनिवरमेनमपव्ययं विधेहि ॥
असुरसुरनरोरगर्षिसिद्धाः समधिगताः सकलाः पुमर्थसिद्धीः ।
सकृदपि यमुपास्य सांब स त्वं मुनिवरमेनमपव्ययं विधेहि ॥ यदि
न मुनिममुं गतव्ययं त्वं सपदि करिष्यसि देव दीनबंधो । इयमपि
नहि तर्हि किंकरी ते स्वमपि धरिष्यति जीवितं दयाब्धे ॥ २६ ॥

( इति प्रार्थयंती साश्रुसलिले लोचने वसनांचलेन परिमृजति । )

**सावित्री**– मातः ! सुकन्यायाः प्रार्थनामिमां नेश्वरो निष्फलां करिष्यतीति मे तर्कः ।

**मालवी**– वत्से ! अवितथस्ते तर्कः ।

**ललिता**– ( साश्चर्यानंदं । ) भर्तृदारिके ! पश्य पश्य संपद्यमानसंज्ञ इव मुनिराजोयं दृश्यते ।

**सुकन्या**– ( परमेश्वरस्यापारमुपकारं मन्यमाना सानंदं पश्यति ।)

**च्यवनः**– ( संज्ञां प्राप्य शनैः शनैः कुसुमशयनादुत्थाय च । )

अहो केनेयं महाव्यथा समुत्पादिता मय्यंधता च केन चेयं मद्व्यथोपशांत्यर्थं परमेश्वरप्रार्थना साश्रुकंठं गीयते ।

सुकन्या– मुनिराज ! नैतत्प्रायो युष्माकमविदितं यदिदानीं भगवतो मनोर्विवस्वतः पुत्रः शर्यातिर्नाम महीमहेंद्रो महीमेतामेकच्छत्रां परिपालयतीति ।

च्यवनः– विदितमेवैतत्ततस्ततः ।

सुकन्या– तेन च नाद्यावधि पुत्रमुखदर्शनसुखं त्वनुभूतं परं व्यतीतेर्द्धे वयसि तस्मान्मंदभागिनीयं पुत्रिकैकाऽहमुत्पन्ना दयार्द्रहृदयाभ्यां पितृभ्यां पुत्रनिर्विशेषं पालिता पोषिता लालिता च ।

च्यवनः ज्ञातपूर्वमेतदपि मे । ततस्ततः ।

सुकन्या– भगवन् ! पुत्रीणामतिलालनात्परिणतिः साध्वी न संजायते इति लोकोक्तिः किं कदाचिदपि व्यभिचरति । हा सैवाहं दयामृतमयाशयाभ्यां याभ्यां पुत्रनिर्विशेषं पालिता पोषिता लालिता च तयोरेव मातापित्रोः केवलं दुःखैकहेतुर्विलक्षणा विचक्षणंमन्या सुकन्या भगवतो महाव्यथोत्पत्तिनिदानतामंधतानिदानतां चोपगतास्मि ।

च्यवनः– (स्वगतं ।) राजकन्येयमल्पवयस्कापि निरपेक्षदाक्षिण्यलक्षणा लक्ष्यते । किमस्यै शापप्रदानसाहसेन । (प्रकाशं । ) तादृशाचरणे किमप्यभूत्ते कारणम् ।

सुकन्या– मुनिराज ! न किमपि कारणं । केवलं वल्मीकांतर्गतं ज्योतिष्मच्छिद्रद्वयं विलोक्य बालभावसुलभेन चापल्येन कंट-

काम्यां भिन्नं तत् । अस्मिन् भविष्यति कश्चित्प्राणिविशेष इत्यपि पूर्वं मन्मनसि नाभूत् परंतु यदातस्मान्निष्पतंती रुधिरधारा निरीक्षिता तदैव निष्पन्नो मनसि मे निःसीमानुतापावेशः ।

च्यवनः– तर्हीमे शांत्युपचारा अपि त्वयैव निर्मिताः किम् ।

सुकन्या– ( महीमालिखंती तूष्णीं तिष्ठति । )

सावित्री– मातर्धन्या सुकन्यासौ जातमज्ञानतोपि या ।
आत्मापराधं निःशंकं स्वयमेव न्यवेदयत् ॥१०॥
स्वयं विरचितां चैतां शांत्युपायक्रियां शुभाम् ।
परिपृष्टाऽपि न ब्रूते स्वापराधक्रियामिव ॥ ११ ॥

मालवी– वत्से सतां स्वभावोयं मनोवाक्कायकर्मभिः ।
प्रियं कृत्वापि निर्व्याजं मौनमेवाश्रयंत्यहो ॥ १२ ॥

ललिता– मुनिराज ! अवितथस्तेतर्कः । प्रियसख्यैव मे सुकन्ययानया विरचिता एते शांत्युपचाराः ।

च्यवनः– प्रथमापराधप्रारंभे प्रारब्धमेवोपालंभपात्रं मे । तदनु तदनुतापपरवशतया तया विरचितैः शांत्युपचारैः प्रसन्नं नः स्वांतं तद्वरणीयः कोपि वरस्ते प्रियसख्या ।

सुकन्या– अयि भगमनुभूयान्मत्कृताद्दुष्कृतान्मा
किमपि सपरिवारो मे पिता वाथ माता ।
निपततु मयि शापस्तावकीनो यथेच्छं
मुनिवर वरमेतन्मात्रमेवाभियाचे ॥ १३ ॥
शापोपि तेऽमृतनदोपमतामुपैष्य-
त्यात्मापराधपरितापकुलाकुलायाम् ।

मय्यत्र तद्धितर दुःसहदुःखदायां
शापं मुनीश्वर यथारुचि मेर्थनेयम् ॥ २७ ॥

**अश्वपतिः**– ( स्वगतं । )
वत्से सुकन्ये धन्येयं मतिर्बाल्येपि तावकी ।
यात्मत्राणमुपेक्ष्याहो पितोस्त्राणमिहेच्छसि ॥१३॥

**सावित्री**– ( स्वगतं । )
सुकन्यायास्तु सारल्यसौशील्यशीतलांबुभिः ।
मुनेरस्य कृपाकल्पलता पल्लविता ध्रुवम् ॥१४॥

**च्यवनः**– राजकन्ये सुकन्ये त्वां शप्तुं नेच्छाम्यहं रुषा
कोन्विच्छेद्दहिना दग्धुं मृदुलां मालतीलताम् ॥२८॥
त्वद्वचः श्रवणात्पूर्वं व्यथाविवशचेतसा
यः शापो निर्मितः सोपि सद्यः शांतो भविष्यति ॥२९॥

**लीलावती**– ( सत्वरं प्रविश्य । ) हला सुकन्ये सुकन्ये ! समाव्हयति माता त्वां तदेहि सत्वरतरं तत्र गच्छामः ।

**सुकन्या**– हला लीलावति ! वैद्यराजमाव्हयितुं प्रेषितापि कथं विना वैद्यराजमागतासि ।

**लीलावती**– नेदानीं वैद्यराजेनात्रागंतुं शक्यं।

**सुकन्या**– कथमेवम् ।

**लीलावती**– ( सुकन्यायाः कर्णे एवम् एवम् । )

**सुकन्या**– हा ! फलितमिदानीं मत्कृतदुष्कृतविषवल्लरीजालेन । धिग्मां दुष्कृतकारिणीं दुराचरणां दुर्विनीतां च याहमिदानीं

सपरिवाराणां पितृचरणानां मातृचरणानां च प्राणांतापत्प्राप्ति-
कारणतामुपगतास्मि ।

च्यवनः— किमेषा कथयति ।

सुकन्या—( सानुतापं साश्रुपातं च । ) मुनिराज ! कथयत्येषा
सपरिवारास्तातचरणा मे मूत्रकृच्छ्रव्याधिना कंठप्राणदशामनु-
भवंतीति ।

> शापं दयार्द्रहृदयोर्प्ययासि स्म न त्वं
> पापं परं कथमिदं न फलेन्ममोग्रम् ।
> धिङ्मे धियं धिगपि जीवितमुग्रत्वं धिक्
> पित्रोर्यदाचरणतो विषमा दशेयम् ॥ ३० ॥

( इति विलपंत्यश्रूणि मुंचति । )

च्यवनः— राजपुत्रि ! मद्वरप्रदानात्पूर्वकालीन एष वृत्तांतः । शांत-
मिदानीं सर्वं । संशयश्चेत्तत्र गत्वा दृष्ट्या विलोक्य च निश्च-
यो विधीयताम् ।

सुकन्या— मुनिराज ! कः संशयो युष्मादृशां वचनेषु । प्रियस-
खि लीलावति ! गच्छ महामुनेरनुग्रहेणाद्य शांतः सर्वोपि त-
त्रोत्पातस्तत्समाव्हय त्वरया वैद्यराजम् ।

च्यवनः— किमर्थमत्र समाव्हयते वैद्यः ।

सुकन्या— मुनिराज ! श्रीमतां चक्षुश्चिकित्सार्थमेव ।

च्यवनः— राजपुत्रि मृषैवेयं मत्याशा ते । यतः—

> कर्तुं मरोगां नीरोगां संत्येव रोगहारिणः ।
> विना श्रीदेववैद्यौ को नष्टां दृष्टिं समर्पयेत् ॥ ३१ ॥

सुकन्या– मुनिवर्य मम प्राणाः स्थास्यंति यदि तर्ह्यहम् ।

स्वर्वैद्यावपि सद्यस्तौ तोपयिष्याम्यसंशयम् ॥ ३२ ॥

अपि यत्नसहस्रेणाप्युपचारचयैः स्वयम् ।

मत्कृतां त्वद्व्यथां शांतां कारिष्यामीति मे मतिः ॥ ३३ ॥

च्यवनः– राजकन्ये कृतं सर्वमिति मन्येधुनामुना ।

उदारेण विचारेण रत्नं त्वं जंगमं ध्रुवम् ॥ ३४ ॥

सुकन्या–भगवन्! निखिलामपीमां मदुक्तिमुपचारमात्रां मन्यसे किम्।

च्यवनः– नहि नहि नृपपुत्रि ते पवित्रां

गिरमुपचारपरां वरांगि मन्ये ।

परमिह नहि संभवं मदीया

मतिरवलोकयति स्म तादृशं तु ॥ ३५ ॥

तथाहि त्वदेकसंतानौ राजदंपती त्वां तावत्तपःकरणायाज्ञापयेतां कमलदलकोमलैरंगैस्त्वं तपः कुर्याः तेन च तपसा स्वर्वैद्यौ तुष्येतामित्येषा किमल्पाऽसंभवोद्भवभूमिः ।

सुकन्या– अयि मुनिमहेंद्र ! वल्मीकादस्मान्निष्पतंतीं रुधिरधारां विलोक्यैव प्रतिज्ञातं किल मया यदेतदंतर्गतो यदि कश्चिद्भविष्यति प्राणी तर्हि परःसहस्रैरपि प्रयत्नैः प्रशांतव्यथं तं विधास्यामीति। परं त्वपसारिते मृच्चये दृग्गोचरं गतेषु च युष्मच्चरणेषु यावज्जीवं युष्मच्चरणपरिचर्यैव विधेयेति निश्चयो मे । याभ्यां कराभ्यां भवत्पदपरिचर्या विहिता न तौ कदाचिदन्यपरिचर्यापरायणौ भविष्यतः ।

अपि च । मुनेर्मत्कृत्यसंतापपापशांतिस्तु न काचित् ।
सेवामेवाचरंती ते किंतु वाञ्छामि जीवितुम् ॥३६॥

च्यवनः— राजपुत्रि ! अदीर्घदृष्टिदृष्टोयं विचारस्ते । यदैव मया श्रुतानि सरलानि मधुराणि मृदुलानि च ते वचांसि तदैव प्रशांतो मे रोषः । यद्विषये न मे रोषस्तद्विषये कुतस्ते पापशंकापि । तदेतद्विषयविषादविचारं दूरीकृत्य पित्रोः परिसरमुपसरेति ममाज्ञा ।

सुकन्या— मुनिराज ! नैतद्विषये किमपि भवद्भिर्वक्तव्यं । नाहं युष्मच्चरणपरिचर्यां परित्यज्य क्वापि गमिष्यामि ।

दृष्टिनाशकरी तेऽहं भवेयं दृष्टिरूपिणी ।
अतःपरं न ते श्रोतुं वचोल्पाक्षरमुच्यते ॥ ३७ ॥
मनसा वचसा कायकर्मणा च महामुने ।
करोमि मे प्राणनाथं त्वां लोकेशाक्षिसाक्षिकम् ॥ ३८ ॥

( इत्युक्त्वा निजकंठादुत्तार्य तारकानिकराकारं हीरकहारं मुनिकंठेर्पयति ।

सावित्री— (स्वगतं ।) ... खलु

**सुकन्या**— अशांतायां व्यथायां वो नान्यं कञ्चिद्वरं वृणे ।
नाल्पमेनं वरं मन्ये यत्पित्रोः कुशलं मम ॥ ३९ ॥
(ललितालीलावत्यौप्रति ।) प्रियसख्यौ ! तत्र गत्वा मातापितृभ्यां मुनिराजमहानुग्रहरूपमिममानंदवृत्तांतं निवेदयतं ।

**उभा**— यथाज्ञा प्रियसख्याः । (इति निष्क्रांते ।)

**च्यवनः**— प्रिये ! त्वया तु मयि महान्निक्षिप्तोयमुपकारभारः ।

**सुकन्या**— प्राणनाथ ! उपकारभारस्तु भवद्भिरेव मयि विहितो यत्तादृशमपि महापराधं न विगणय्य यावज्जीवमात्मचरणदास्ये स्वीकृताहं । नाथ ! किंब्रवीमि भवत्सु महाव्यथोत्पादनानुतापो न मे हृदयात्क्षणमप्यपसरति ।

**च्यवनः**— इदानीं मुंचेममनुतापं ।

**सुकन्या**— नैतन्मदधीनं ।

**च्यवनः**— प्रिये ! नैतदविदितं ते यन्नृणां प्राक्तनकर्माधीनैव सुखदुःखोपलब्धिरिति ।

**सुकन्या**— एवमेव ।

**च्यवनः**— श्रूयतां तर्हि । पूर्वजन्मनि जनोयं शिबिदेशाधिपतेर्महाराजस्य राजसिंहस्य परमं मित्रमासीत् ।

**सुकन्या**— ततस्ततः ।

**च्यवनः**— राजसिंहस्तु जनममुं प्राणनिर्विशेषमगणयत् । तद्धर्मपत्नी पतिव्रता चंद्रकला च सोदरनिर्विशेषमगणयत् । तस्मिन् समये नामुनाजनेनोत्तमकृत्येषु वैमुख्यमूरीकृतमिति मुनिकुलचक्रवर्तीदं निवेदयति ।

सुकन्या— अथ किं। नाल्पपुण्यलभ्यं हि सत्कुले जन्म। ततस्ततः।

च्यवनः— न जाने दैवयोगात् शापयोगात् पूर्वजनुःपापयोगाद्वा एकदा पवित्रचरित्रायां चंद्रकलायां मे सपापा दृष्टिर्न्यपतत्। अनभिज्ञावेव तद्विषये चंद्रकलाराजसिंहौ। केवलं मन एव मे तदभिज्ञमभूत्।

सुकन्या— (स्वगतं।) उपालंभपात्रमत्र वामः कामो न महाभागः। (प्रकाशं) ततस्ततः।

च्यवनः— राजपुत्रि! सर्वोऽपि पापमाचरन् न मां कश्चिज्जानातीति मन्यते। परमयं तस्य महान् प्रमादः।

व्योमानिलानलजलान्यचला कलाभृ-
द्भास्वान्निशादिनदिशोऽतिचलश्च कालः।
साक्ष्यं भजंति मनुजेन विनिर्मितस्य
कृत्यस्य भूमिपतिपुत्रि शुभाशुभस्य॥ ४०॥

सुकन्या— प्राणनाथ! सर्वज्ञः सर्वांतर्यामी मनोजन्यमपि जानात्येव। ततस्ततः।

च्यवनः— परमपवित्रचरित्रयोश्चंद्रकलाराजसिंहयोर्न विगणय्य निःसीमानं स्नेहं न विलोक्य निष्प्रतिमं विश्वासं न विचार्य च निर्निमित्तां भक्तिं पापाभ्यामाभ्यां लोचनाभ्यां सकृदर्द्धनिमेषमात्रमपि यत्पापा गतिराश्रिता नाल्पमभूत्तत्पापं। प्रिये! किं वर्णयामि तस्य पापस्य महत्तां। तत्क्षण एव शास्त्रसंगसत्संगप्राबल्यात् संजातदुःसहानुतापेन तच्छांतये तस्मिन्नेव जन्मनि

मया यथाशास्त्रमनेकानि दानानि निःशेषेषु तीर्थेषु स्नानानि दयालुदेवध्यानानि प्रतिक्षेत्रं च तत्तद्देवलिंगदर्शनस्पर्शनाराधनानि च विहितानि । परासुना च यमलोके यमाज्ञयानुभूतास्तदनुरूपाः शतशो यातनाः । अनंतरमस्मिन्नपि जन्मनि गुरुकुलवासमात्रमनुभूय तप एव प्रारब्ध । वातवर्षातपहिमाद्यनेकोपद्रवसहिष्णुना च तदद्यावधि कीदृग्विहितं तत्र तु नं त्वमप्यनभिज्ञा ।

सुकन्या– अथ किं । वल्मीकांतर्वर्तिवपुषः पिपीलककुलनिपीतमेदोमांसशोणितस्य अस्थिपंजरमात्रचंक्रममाणप्राणस्य भगवतो दृष्टचानया मया दृष्टा तपःपराकाष्ठा ।

च्यवनः– एतस्मिन्तपस्यपि बहुवारं भगवतो ब्रह्मणो महाविष्णोर्महारुद्रस्य च साक्षाद्दर्शनान्यप्यनुभूतान्याभ्यां लोचनाभ्यां परं कृतकर्मक्षयो नास्तिकल्पकोटिशतैरपीति शास्त्रोक्तिर्न मृषा । तथैवानयोरपि निष्पापां चंद्रकलांमति निमिषार्द्धमात्रमपि निर्मितस्य दुःमसाररूपकर्मणः परिणतिर्भोक्तव्यासीत् यन्निमित्ता तादृशी ते मनः प्रवृत्तिर्निष्पन्ना ।

सावित्री– ( मालवींप्रति । )

> मातः सदुपदेशानां निधिरुद्घाटितस्त्वया ।
> मन्येस्मिन्नाटके रम्यो दयामृतमयाशये ॥ १८ ॥

अश्वपतिः– देवि ! यथार्थैवोक्तिः सावित्र्याः ।

मालवी– सर्वोपि श्रीमतां कृपाप्रभावः ।

शत्रुशल्यः–महाराज ! उपकारास्त्वस्माद्युष्माभिरसंख्या

विहिताः परमेतत्प्रेक्षणकप्रेक्षणाज्ञार्पणरूप उपकारस्त्व-
द्भुत एव ।

च्यवनः–प्रिये ! येन यद्विहितं कर्म तस्मिन् तत्फलभोगिनि ।
किमर्थमनुतप्तव्यं त्वयेति त्वं विचारय ॥४१॥

सुकन्या–प्राणनाथ ! भवद्भिस्तु यदुक्तं तद्युक्तं नास्त्यत्र संशयः ।
परं करुणाकरवमेतत्तदनुतप्यते ॥ ४२ ॥

भगवन् ! मन्मनोलग्नोयमनुतापस्तु तदा शांतो भविष्यति ।

च्यवनः– कदा ।

सुकन्या– यदा दयालुदेववैद्यदयावलोकेन प्रशांतव्यथं प्राप्ता-
भिनवनयनयुगलं च भगवंतं द्रक्ष्यामि । तत्तयोरुपरि तपःक-
रणाय भवदाज्ञप्तमात्मानमिच्छामि । मन्ये च निसर्गदयालवो यूयं
नैनां मदभ्यर्थनां निष्फलां करिष्यथेति ।

च्यवनः– यर्हि तादृश एव सदाग्रहस्ते तर्हि ममाप्यभिमतमेनत् ।

सुकन्या– परमोनुग्रहोयं ।

च्यवनः– प्रिये ! चिरान्नते अपि ते ललितालीलावत्यौ भवत्यद्वृ-
त्तांतकथनाय । कथं न पुनः प्रतिनिवृत्ते ।

सुकन्या– ( पृष्ठतो विलोक्य । ) प्राणनाथ ! तातपादा मे सप-
रिवाराः पद्भ्यां चलंतो भगवत्समीपमागच्छंति । भवेच्चेद्भवदाज्ञा
तर्हि कतिचित्पदानि तदभिमुखं गच्छेयं ।

च्यवनः– कामं गम्यतां ।

सुकन्या– यथाज्ञा प्राणनाथस्य । ( इति निष्क्रांता । )

( ततः प्रविशति देव्या सुशीलया सहितो ललितालीलावती-

स्यामनुगम्यमानः सपरिवारः शर्यातिः । )

शर्यातिः– (प्रविश्य । ) मुनिराज ! मानवः शर्यातिरहमभिवंदे ।

सुशीला– भगवन् ! महाराजस्यास्य धर्मपत्नी सुशीलाहमभिवंदे ।

च्यवनः– विजयोस्तु युवयोः सदा ।

सुकन्या– दयार्द्रहृदये मातः पवित्राशय हे पितः ।

प्रणमामि सुकन्याहं युष्मदाज्ञानुवर्तिनी ॥ ४३ ॥

शर्यातिः– वत्से ! पवित्रं ते चारित्रं विलोक्य पूरयतु परमेश्वरो निखिलानभिलाषांस्ते ।

सुशीला– वत्से ! एतर्हि महापन्महोदधिनिमग्नानामस्माकं वत्सायाः सौशील्यमेव प्राणत्राणकरमस्ति ।

सुकन्या– मातः ! युष्माकं पुण्यान्येव सर्वतः संरक्षकानि संत्येव । तथापीदानीं तु सर्वेषां संरक्षको महामुनेरस्यानुग्रह एव ।

सुशीला– पुत्रि ! यथार्थैवोक्तिस्ते । वत्से ! ललितालीलावतीभ्यां निवेदितं वृत्तांतमुपश्रुत्य निरतिशयानंदमनुबभूव मानसं नः ।

सुकन्या–मातर्युष्माकमेतद्वचनं श्रुत्वा परमं परमेश्वरोपकारं मन्ये।

सुशीला–वत्से ! ज्ञातज्ञातव्याया वत्साया बाल्येपि प्रबुद्धा बुद्धि-स्तथापि मातृभावसुलभा वत्सलता प्रेरयति मां कतिपयानि सदुपदेशवाक्यानि श्रावयितुं ।

सुकन्या– परमः प्रसादोयम् । श्रोतुमवहितैवास्मि ।

सुशीला– ललिते ! लीलावति ! सुकन्यायै वक्तुं कवितया निबद्धानीमानि हितोपदेशवाक्यानि युवाभ्यामेव गीयतां । (इत्युक्त्वा पत्रिकां तत्करे समर्पयति । )

ललितालीलावत्यौ– यथाज्ञा मातुः । ( इति गायतः । )

यस्माद्यशः स्वममलं प्रसरेज्जगत्यां
यस्माद्भवेदुभयलोकहितं नितांतम् ।
तत्कार्यमेव किल कार्यमिहार्यधार्य
वत्से विनीतवनिताश्रित एव मार्गः ॥ ४४ ॥
प्राणेश्वरं परिचरेन्मनसा वचोभिः
कायक्रियाभिरमलाभिरनन्यभक्त्या ।
संगं त्यजेच्च फणिनामिव दुर्गुणानां वत्से० ॥ ४५ ॥
कुप्येद्यथा नहि निजो हृदयाधिनाथ–
स्तुष्येद्यथा स च तथानुदिनं विधेयम् ।
पूज्यः परेश्वरधियैव च निर्व्यलीकं वत्से० ॥ ४६ ॥
ज्ञानं न पूरयति हंत मनोभिलाषान्
दानं व्रतानि च विनात्महृदीश्वराज्ञाम् ।
कुर्यात्ततस्तदखिलं तदनुज्ञयैव वत्से० ॥ ४७ ॥
सत्यं प्रियं च मधुरं मृदुलं हितार्थं
नेयं वचः प्रियतमश्रवणातिथित्वम् ।
स्वप्नेप्यसत्यमहितं च वदेन्न रुक्षं वत्से० ॥४८॥
अंधो जडोपि बधिरः स्थविरोधनो वा
रुग्णोपि रोषणतरोपि पतिः प्रयत्नात् ।
पूज्यः परेश्वरधिया प्रणयेन भक्त्या वत्से० ॥४९॥
जानीहि निर्मलदुकूलमिहाततां त्वं
सौशील्यभूषणमदूषणमेव विद्धि ।

स्वाराधनं धनमवेहि निजप्रियांघ्रिं वत्से० ॥ ९० ॥
विद्याविवेकविनयाभरणातिहृद्या
भूयात्तथा परिहरेश्च वृथा विवादान् ।
कुर्यात्कदाचिदपि नात्मकुलाभिमानं वत्से० ॥ ९१ ॥
धैर्यं विधार्य विपदा हृदि नाकुलास्या-
न्नोच्छृंखलापि च विशृंखलसंपदा वा ।
प्राणप्रियं परिचरेत्प्रणयात्प्रयत्नैर्वत्से० ॥ ९२ ॥
आत्मा यथा नहि भवेत्सुजनोपहास्यः
शोच्यः सुहृद्भिरथवा कुजनोपनिंद्यः ।
यत्नात्तथा भव यथा महतां चलंती वत्से० ॥ ९३ ॥
कार्यं जरामरणहीनमिहाभिधानं
स्वैः सद्गुणैश्च कुलयोरुभयोर्यशोपि ।
धार्यं प्रियोदयकरं व्रतमार्यधार्यं वत्से० ॥ ९४ ॥
उक्तेन किं बहुतरेण समस्तशास्त्र-
सारं ब्रवीम्युभयलोकहितं ब्रवीमि ।
प्राणेश्वरो विमलवंशविलासिनीनां
सर्वस्वमुत्तमतमं परदैवतं वा ॥ ९५ ॥
तस्मान्मनोवचनकर्मभिरव्यलीकै-
र्भक्त्या च शुद्धतरया कुलकामिनीभिः ।
प्राणप्रियप्रियमिहोभयलोकपथ्यं
वत्से विधेयमपि जीवितमर्पयित्वा ॥९६॥

सावित्री– ( स्वगतं ) ईदृश एव जानंतीदृशान्युपदेशम् ।

अश्वपतिः– ( स्वगतं । ) नामानुरूपगुणाहि देवी सुशीलेति सूक्तिरेवैषा निवेदयति ।

सुकन्या– ( स्वगतं । ) विनाँ मातरं कान्या सदुपदेशसुधालहरीभिरीदृशीभिरभिषिंचेत् । ( प्रकाशं । )

मातर्दयार्द्रहृदये यावज्जीवमनुक्षणम् ।
यथा त्वदाज्ञां वर्तिष्ये मनोवाक्कायकर्मभिः ॥९७॥

तदेतद्विषये निश्चिततरेण भाव्यं मातृचेतसा ।

सुशीला– वत्से ! त्वादृशीनां तादृशमेवाचरणमाभरणं ।

शर्यातिः– पुत्रि सुकन्ये ! यद्यपि दुःसहस्ते विरहस्तथापि किंकरोमि । त्वन्निर्विशेषप्रेम्णा परिपालितायां प्रजायां वात्सल्यविवशं मे स्वांतं तत्र गंतुं समाकर्षति मां ।

सुकन्या– पुत्रनिर्विशेषप्रेमपालितायाः प्रजायाः संभावनायै सुखेन गंतव्यं तातचरणैर्न च मद्विषयिणी कापि चिंता विधेया ।

शर्यातिः– वत्से ! महामुनेरस्य प्रसादात्त्वद्विषये तु निश्चितमेव मे चेतः । ( मुनिं प्रति । ) मुनिराज ! ( इत्यर्धमुक्त्वा साश्रुसलिललोचनो गद्गदगलश्च तूष्णीमेव तिष्ठति । )

अश्वपतिः– ( स्वगतं । ) अतिधीराणामपि धैर्यहर औरसप्रजाविरहः खलु ।

सावित्री– ( स्वगतं । ) मातापित्रोः स्वापत्यविषयः कोप्यन्यादृश एव प्रेमातिरेकः ।

सुशीला– मुनिराज ! एतेषां वक्तव्यं त्वेतदेवास्ति यदेषा सुकन्ये-

दानीं युष्मच्चरणयोरर्प्यते तत्संतव्या अस्या बालभावसुलभा अपराधाः श्रीमद्भिरिति।

च्यवनः— देवि ! महाराजेन देव्या च तद्विषये न कापि चिंता विधेया।

शर्यातिः— महानुभाव मुनिराज ! सर्वज्ञानां श्रीमतामग्रे स्वल्पप्रज्ञः स्वल्पज्ञश्च मादृशः किमिति विज्ञापयेत्। केवलमेतावदेव विज्ञापयामि यदेनां बहिश्चरप्राणप्रतिमां युष्मत्सेवायां समर्प्य गच्छामि। चरमोयं मे प्रणामः।

च्यवनः— जानामि महाराज ! जानामि सर्वमेतत्। कामं गम्यतां शिवाः संतु वः पंथानः।

सुशीलाशर्यातौ— ( मुनिं प्रणम्य चलतः। )

सुकन्या— ( विनयात्तावनुगच्छति। )

लीलावती— प्रियसखि सुकन्ये ! एहि परिष्वज नौ।

ललिता— चरमोयं नौ परिष्वंगः। ( इत्युभौ साश्रुधारे सुकन्यां परिष्वजतः। )

सुकन्या— सख्यौ ! युवाभ्यामद्यावधि काप्यवर्ण्यैव परिचर्या विहिता मे ततस्तद्विषयं नाहं युवयोरुपकारं कदाचिदपि विस्मरिष्यामि।

ललितालीलावत्यौ— हला सुकन्ये ! धर्म एवायमावयोः कस्तत्रोपकारः।

सुकन्या— सख्यौ ! न यथा मद्विरहव्यथामनुभवेतां पितरौ मे तथा वर्तितव्यं युवाभ्यां।

ललितालीलावत्यौ– सखि ! निश्चितैव भवैतद्विषये ।

सुकन्या– अयि मातः ! अयि पितः ! इमे प्रियसख्याविनःप्रभृति युष्मच्चरणयोः समर्प्यते ।

सुशीला– ( साश्चर्यं पृष्ठतोवलोक्य । )

इयंतमध्वानमहो किमर्थं
समागता पल्लवपेशलांगी ।
विरम्यतां पुत्रि विदूरवर्ती
वनादितो यश्च्यवनाश्रमः सः ॥ ९८ ॥

सुकन्या– इमे मे प्रियसख्यौ । ( इत्यर्धमुक्त्वा साश्रुलोचना तूष्णीं तिष्ठति । )

शर्यातिः– वत्से ! त्वन्निर्विरोधे एवैते मे ।

सुशीला – वत्से ! किमेतदपि वक्तव्यम् ।

सुकन्या– मातस्तयोः मदास्यकुलशीलवयःस्वरूपसद्गुणाभ्यां पतिभ्यां संपाद्य पाणिग्रहणमहोत्सवं तदानंदमहत्ति प्रेषयिष्यसि ।

सुशीला– वत्से ! किमयं महोत्सवो विना त्वया भविष्यति ।

शर्यातिः– ( अश्रूणि वर्षन् । ) पुत्रि ! दूरे हि ते तपोवनं नयनपीडापरवशश्च भगवान् मुनिराजस्तदित एव निवर्तस्व ।

सुकन्या– तात ! धृता मयैषा युष्मदाज्ञा शिरसा । (इति वदंती साश्रुलोचना तरुच्छायामाश्रित्य तिष्ठति । )

सुशीला– वत्से ! स खलु भगवान् मुनिराजो निर्व्यलीकभक्तिभरितैर्मनोवाक्कायकर्मभिः परमेश्वराभियैव परिचर्य इति ।

सुकन्या– मातर्न विस्मरिष्यामीमानि यावज्जीवमुपदेशाक्षराणि ।

शर्यातिः– वत्से! अतीवदूरवर्ती स आश्रमस्तदितः प्रतिनिवृत्तायामेव वत्सायां वयं यास्यामः।

सुकन्या– इयं मे चरमा प्रयाणप्रणतिः। (इत्युक्त्वा प्रणम्य निष्क्रांता।)

ललितालीलावत्यौ– (परावृत्य सुकन्यामार्गमालोकयंत्यौ शून्यचित्ते तिष्ठतः।)

शर्यातिः– वत्से! ललिते! वत्से लीलावति! गता वां प्रियसखी स्वकीयमाश्रमपदं तदेतं वयमपि गच्छामः।

ललितालीलावत्यौ– (सुकन्याविरहविह्वलचित्ते बाष्पकलाकुललोचने रुद्धकंठयौ निरुत्तरं तिष्ठतः।)

मालतीमाधव्यौ– (स्वगतं सास्रं।) हा प्रियसख्याः साविज्या विरहादावाभ्यामप्येषैव दशानुभूतव्या।

सुशीला– (ललितालीलावत्योर्लोचने स्वनेलांचलेन परामृशंती।) अयि पुत्र्यौ! किमियं विषादवेला। सुहृदां विरहोपि पुनः संगमेधिकमानंदयति।

ललितालीलावत्यौ– मातः किं कुर्वो नावां पदात्पदमपि चलतश्चरणौ विना नौ प्रियसख्या सुकन्यया। तदस्ति चेदाज्ञा सुकन्यासमीप एवावामपि निवसावः।

शर्यातिः– (सास्रं धैर्यमालंब्य।) पुत्र्यौ! नैवं भाव्यं। स्वल्पैरेवाहोभिर्वयं भगवंतं मुनिराजं सुकन्यासमेतं शुभप्रसंगेऽस्मन्नगरनिवासाय निमंत्रयिष्यामस्तदेतमिदानीं गच्छामः।

ललितालीलावत्यौ–( निःश्वस्य।) तर्हि निरुपाये स्वः। (इत्यु-

ललितालीलावत्यौ– सखि ! निश्चितैव भवैतद्विषये ।

सुकन्या– अयि मातः ! अयि पितः ! इमे प्रियसख्याविनःप्रभृति युष्मच्चरणयोः समर्प्यते ।

सुशीला– ( साश्चर्यं पुरतोवलोक्य । )

इयंतमध्वानमहो किमर्थं
समागता पल्लवपेशलांगो ।
विरम्यतां पुत्रि विदूरवर्ती
यनादितो यद्यवनाश्रमः सः ॥ ९८ ॥

सुकन्या– इमे मे प्रियसख्यौ । ( इत्यर्धमुक्त्वा साश्रुलोचना तूष्णीं तिष्ठति । )

शर्यातिः– वत्से ! त्वन्निर्विशेषे एवैते मे ।

सुशीला – वत्से ! किमेतदपि वक्तव्यम् ।

सुकन्या– मातस्तयोः सदृशकुलशीलवय स्वरूपसद्गुणाभ्यां पतिभ्यां संपाद्य पाणिग्रहणमहोत्सवं तदानन्दमश्रुवार्त्तां प्रेषयिष्यसि ।

सुशीला– वत्से ! किमयं महोत्सवो विना त्वया भविष्यति ।

शर्यातिः– ( अश्रूणि वर्षन् । ) पुत्रि ! दूरे हि ते तपोवनं नयनपीडापरवशश्च भगवान् मुनिराजस्तदित एव निवर्तस्व ।

सुकन्या– तात ! धृता मयैषा युष्मदाज्ञा शिरसा । (इति वदंती साश्रुलोचना तरुच्छायामाश्रित्य तिष्ठति । )

सुशीला– वत्से ! स खलु भगवान् मुनिराजो निर्व्यलीकभक्तिभरितैर्मनोवाक्कायकर्मभिः परमेश्वराभियैव परिचर्य इति ।

सुकन्या– मातर्न विस्मरिष्यामीमानि यावज्जीवमुपदेशाक्षराणि ।

शर्यातिः– वत्से ! अतीवदूरवर्ती स आश्रमस्तादितः प्रतिनिवृत्ता-
यामेव वत्सायां वयं यास्यामः ।
सुकन्या– इयं मे चरमा प्रायाणप्रणतिः । ( इत्युक्त्वा प्रणम्य
निष्क्रांता । )
ललितालीलावत्यौ– ( परावृत्य सुकन्यामार्गमालोकयंत्यौ शून्य-
चित्ते तिष्ठतः । )
शर्यातिः– वत्से! ललिते ! वत्से लीलावति ! गता वां प्रियसखी
स्वकीयमाश्रमपदं तदेतं वयमपि गच्छामः ।
ललितालीलावत्यौ– ( सुकन्याविरहविह्वलचित्ते बाष्पकलाकु-
ललोचने रुद्धकंठचौ निरुत्तरं तिष्ठतः । )
**मालतीमाधव्यौ**– (स्वगतं सास्रं ।) हा प्रियसख्याः
सावित्र्या विरहादावाभ्यामप्येषैव दशानुभूतव्या ।
सुशीला– ( ललितालीलावत्योर्लोचने स्वचेलांचलेन परामृशंती । )
अयि पुत्र्यौ ! किमियं विषादवेला । सुहृदां विरहोपि पुनः
संगमेधिकमानंदयति ।
ललितालीलावत्यौ– मातः किं कुर्वो नावां पदात्पदमपि चलत-
श्चरणौ विना नौ प्रियसख्या सुकन्यया । तदस्ति चेदाज्ञा सु-
कन्यासमीप एवावामपि निवसावः ।
शर्यातिः– ( सास्रं धैर्यमालंब्य । ) पुत्र्यौ ! नैवं भाव्यं । स्वल्पै-
रेवाहोभिर्वयं भगवंतं मुनिराजं सुकन्यासमेतं शुभप्रसंगेऽस्मन्न-
गरनिवासाय निमंत्रयिष्यामस्तदेतामिदानीं गच्छामः ।
ललितालीलावत्यौ–( निःश्वस्य । ) तर्हि निरुपाये स्वः । (इत्यु-

कृत्वाग्रतश्चलतः ।)

शर्यातिः सुशीला च— ( तपोवनाभिमुखं स्थित्वा करसंपुटं च कृत्वा ।)

तपोवन नमस्ते स्तान्मुनिराज नमोस्तु ते ।
वत्से सुकन्ये सौभाग्यमनुभूयाः शतं समाः ।
भवताद्भवतां भूयोप्यचिरादेव संगमः
अपर्णाप्राणनाथस्य प्रसादादिति मेर्थना ॥ ५९ ॥

( इत्युक्त्वा निष्क्रामतः ।)

( ततः प्रविशति सोद्वेगा सुकन्या ।)

सुकन्या— ( प्रविश्योर्ध्वमवलोक्य ।)

पूर्णं तपोमनुजपोपि च मेद्य पूर्णः
पूर्णं च हायनमशेषमविघ्नलेशम् ।
अद्यापि नाभरभिपश्वरदर्शनाशा
पूर्णेति तापमुपयाति मनो मदीयम् ॥ ६० ॥

अथवावशिष्टां पूर्णाहुतिं करोमि तावदेववैश्वावप्यागमिष्यत एव । न मे प्राणनाथस्य वचसि वैतथ्यं संभवेत् । ( इत्युक्त्वा पूर्णाहुतिं करोति । पूर्णपूर्णाहुतिश्चाग्निकुंडं प्रदक्षिणीकृत्य प्रणम्य च मुनिराजं ।) अयि प्राणनाथ ! अयि हृदयदयित ! (इत्युच्चैराहूय स्वगतं ।) मन्ये कृतसमाधिर्मे प्राणप्रियस्तत्समाप्तौ तस्मिन् सर्वं तपोवृत्तांतं निज्ञापयिष्यामि । ( इत्युक्त्वाग्निकुंडसमीपे समुपविशति ।)

( तत आकाशादवतरतो मायामयौ देववैद्यौ । )

प्रथमः— अयि राजपुत्रि !

सुकन्या— ( नेत्रे निमील्य पृष्ठं दत्वा च स्वगतं ।) काचेतौ गगनतलादवतीर्णौ । देववैद्यौ चेत्कथं मां राजपुत्रीति साभिलाषमिव ब्रूतः कथं च नांतःकरणं मे तत्र प्रीतिं प्रतिबध्नाति । ( इति विचारयंती तूष्णीं तिष्ठति । )

द्वितीयः— अयि नरेंद्रनंदिनि ! कथं वरप्रदानायैव प्राप्तावप्यावामनादृत्य पराङ्मुखी तिष्ठसि ।

सुकन्या— ( स्वगतं । ) विना निश्चयं न तयोर्मुखं विलोक्यं । ( प्रकाशं । ) भगवंतौ कतमौ देवौ युवां ।

प्रथमः— त्वया संवत्सरादारभ्याद्यावधि कतमौ समुपास्येते देवौ ।

सुकन्या—अहं तु निरवद्यहृद्यविद्यौ भगवंतौ देववैद्यावेव समुपासे।

द्वितीयः— तर्हि तावेवावामवेहि ।

सुकन्या—( स्वगतं । ) यदि तावेवैतौ तर्हि मत्प्राणनाथनिर्दिष्टलक्षणानुरूपस्वरूपाभ्यां भाव्यमाभ्यां । विलोकयामि तावत् । (इति विचार्य विलोक्य तैस्तैर्लक्षणैर्निश्चित्य च प्रकाशं । ) अयि देववैद्यौ ! प्रणमामि वां ।

प्रथमः— राजपुत्रि ! सुखिनी भूया वृणीष्वाभिलषितं ते ।

सुकन्या— अनेत्रः प्राणनाथो मे सनेत्रो वां प्रसादतः ।
भूयादसावितीच्छा मे देववैद्यौ दयामयौ ॥ ६१ ॥

द्वितीयः— ( मुनिं विलोक्य सोपहासं । ) राजपुत्रि ! जराजीर्णेनामुनास्थिपंजरेण निर्लोचनेनापि किं फलं सलोचनेनापि वा किं

फलं। नैतादृश्यातिदुष्करयानया पर्युपासनया संतोष्य नः स्वां-
तमेतदभ्यर्थनीयं ते।

सुकन्या– ( सावज्ञं। ) तर्हि यथेच्छं गम्यतां न मेन्यत्प्रयोजनं।

प्रथमः– कोमलांगि किमकारणमेवं
किंकरेपि कुपितासि निर्जनेस्मिन्।
मामुपाश्रय यथेच्छमयुं वा
नाकमाकालयितासि ततस्त्वम्॥ ६२॥

द्वितीयः– सुगात्रि गात्राणि मृदुत्वपात्रा-
ण्यमूनि न क्लेशसहानि यत्ते।
तदावयोरेकमुपाश्रिता त्वं
भवामरीपूजितपादपद्मा॥ ६३॥

सुकन्या– ( सक्रोधम्। ) अरेरे पापौ! अपसरतमपसरतं।
धिगस्तु युवयोर्बुद्धिं धिग्विद्यां धिक् च वैद्यताम्।
यौ स्वपुत्रीसमानायां मयि पापमयाशयौ॥ ६४॥
( बद्धांजलिः सूर्याभिमुखमवलोक्य। ) अयि लोकत्रयीकर्मसा-
क्षिन् देव दिनमणे!
यद्यमुष्मिन् प्राणनाथे परमेश्वरधीरहम्।
तर्हि त्वेषा भगवती भूतधात्री प्रसत्विमौ॥ ६५॥
( इत्युक्त्वा रोषावेशविवशा मूर्च्छया पतति। )

उभौ मायावैद्यौ–हाहतौ स्वः। ( इत्युक्त्वा भूमौ प्रविशतः। )
( ततः प्रविशति हरिणमनुगम्यमानः सशरासनः शर्यातिः )

शर्यातिः– अतिदूरमुपागतोस्म्यहं

मम सेनाप्यतिदूरवर्तिनी ।
श्रुतिगोचरतां प्रयाति य-
न्न रथानामपि मंजुलो ध्वनिः ॥ ६६ ॥

अतिवेगवता हयेन यं
हरिणं रम्यमनुद्रुतो द्रुतम् ।
स तपोवनमेतदाविशत्
तदवश्यं मुनिनाल्पपालितः ॥ ६७ ॥

अवध्यः स खल्वाश्रममृगः । ( इति शरं धनुषोवतार्य हयं च कस्यचित्तरोः शाखायां निबध्य तपोवनशोभामीक्षमाण इतस्ततः परिक्रमति । स्मृतिमभिनीय साश्चर्यं । ) अहो किमयं भगवतश्च्यवनस्यैवाश्रमः ।

हरिण हरिण भद्रं तावकं वत्स भूया-
द्वनमिदमुपयातोहं तु यस्य प्रसंगात् ।
बहुदिवसवियुक्तां चात्र वत्सां सुकन्यां
नयनयुगमिदं मे द्रक्ष्यति प्राणतुल्याम् ॥ ६८ ॥

( इत्युक्त्वा च्यवनाश्रमंप्रति गच्छति । )

सुकन्या–( संज्ञामुपलभ्य । ) हा दैव ! किमिदमापतितं। हा! मयेमेनत्सत्यं स्वप्नो वा । कतमस्य पापस्य परिणामोयं येन ताभ्यां पापाभ्यामचिंतित आपतितः परिचयो मे । हा ! धिगिमे मे लोचने याभ्यां दुष्टौ तौ दृष्टौ । हा ! धिगिमे मे श्रवणे याभ्यां श्रुता तयोर्दुःश्रवा वाणी। हा ! धिगिमां मे जिव्हां

यया संभाषितौ तौ। हा! अमराणामपि तादृशी पामराशयता। अथवाधमाधमा पापतमा धिक्कारसहस्रपात्रं चाहमेव नेतरे।

यतः

पतिव्रता यद्यहं स्यां निष्पापं यदि मे मनः।
कथं तर्हि तयोस्तादृग्वचोपि निःसरेन्मुखात्॥ ६९॥

हा! समाधिस्थ एव प्राणेश्वरे श्रुतं मया तयोस्तादृशं प्रलपितं अत एतत्पापपापनुत्तयेस्मिन्नग्निकुंडे शरीरमिदं हव्यद्रव्यतां नयामि। ( इत्युक्त्वाग्निकुंडं प्रदक्षिणीकृत्य। ) हे लोकबंधो जगत्साक्षिन् छायासंज्ञाहृदयदयित भगवन् नभोमणे! जन्मत आरभ्यानेन जनेन न मातुर्न पितुर्न पत्युर्वा मनोभिलाषः पूरितः केवलं सर्वेषां तेषां क्लेशाश्लेषमूलतामुपगताहं। सांप्रतमेतावदेव याचे यद्यहं प्राक्तनार्वाक्तनानेककर्मचक्रचंक्रमणक्रमेण नानाविधानेकजातिषु भ्रमंती मानुष्यमुपलप्स्येयं तर्हि सैव मे माता स एव मे पिता अयमेव च मे प्राणपतिर्यथा भवेत्तथा करिष्यसि। हा दयार्द्रहृदये मातः! हा पवित्रचरित्रचिंतामणे पितः! क एतां प्रवृत्तिं युष्मभ्यं कथयिष्यति। सोयं चरमः प्रणामः। गच्छाम्यपुनर्दर्शनाय। अनुजानीतं मां।
( इत्युक्त्वाग्निकुंडे परिक्रमति। ततः प्रविशति शर्यातिः। )

शर्यातिः– ( विलोक्य सोद्वेगं स्वगतं। ) कथं विचक्षणापि वत्सात्मघातसाहसमंगीकरोति। (प्रकाशं। ) वत्से वत्से सुकन्ये! किमेतद्व्यवसितं।

सुकन्या— ( अनाकर्णितकेन । )

मातः सुशीले शर्याते पितर्वां मंदभागिनी ।
पुत्री प्रयात्याहुतितां हुताशेस्मिन्नमोस्तु वाम् ॥ ७० ॥

( इत्युक्त्वाऽग्निकुंडे पतितुमिच्छति । )

शर्यातिः— (सत्वरं पृष्ठतो गत्वा करं गृहीत्वा च ।) वत्से ! अल-मलमावेगेन ।

सुकन्या— हा ! को मां स्पृशति करे करेण । ( इत्युक्त्वा सभयं विलोक्य साश्चर्यं । ) अहो ! पितृपादाः । स्वागतं वः । सुक-न्यायाश्चरमोयं प्रणामः ।

शर्यातिः— वत्से ! कोयं ते मतिमोहः कोयं ते मुग्धताप्रकारः को-यं च ते रभसारंभः । पारेपरार्द्धैरपि प्रायश्चित्तैरनुपशमनीयं परः-सहस्रैरपि दानध्यानदेवताराधनैरनपाकरणीयं परःशतैरपि त-पोजपोपवासतीर्थावगाहैरमार्जनीयं चात्मघातपातकमिति ना-विदितं ते । त्वादृशीनां कुलकन्यानां न स्वप्नेप्युचितमेतत् ।

सुकन्या— अयि तातपादाः ! इदानीं निंदितमप्येतदनिंदितं मन्ये । नाहमसारेस्मिन् संसारे स्थातुमिच्छामि ।

शर्यातिः— जाते ! केन तादृशं तेपराद्धं येनैष ते रोषावेशः ।

सुकन्या— तात ! किंब्रवीमि ।

ध्येयान् वंद्यांश्च पूज्यांश्च यांस्तु मन्यामहे वयम् ।
किं कर्तव्यं क्व गंतव्यं तेपि चेत्स्युर्दुराशयाः ॥ ७१ ॥

शर्यातिः— वत्से ! किं केनापि देवेनाकृतं ते ।

सुकन्या– अथ किम् ।

शर्यातिः– पुत्रि ! माभैः । परमेश्वरप्रसादाद्देवानपि दंडयितुं प्रभवत्येष मे करालः करवालः ।

सुकन्या– तात ! यद्येवं तर्हि युष्मदीयदोर्दंडदत्तप्रचंडदंडखंडिताखर्वगर्वपर्वतान् तान् विलोक्य सपरितोषं परित्यक्तुमिमिच्छामि प्राणान् ।

शर्यातिः– वत्से ! ब्रूहि कतमेन देवेनापराद्धं ते इंद्रेण यमेन वरुणेन कुबेरेण वा ।

सुकन्या– सर्वेपि ते निर्दोषाः ।

शर्यातिः– कस्तर्हि सदोषः ।

सुकन्या– तात ! न तयोः पापयोरभिधानमपि वक्तुमुचितं मे । ( इत्युक्त्वा गगनमार्गादवतरंतौ भगवंतौ देववैद्यौ विलोक्य । ) तात ! तात ! पश्य पश्य पुनरप्युपागतौ तौ पामरावमरौ याभ्यामपराद्धं मे ।

शर्यातिः– ( सक्रोधं निष्कोशमसिमुद्यम्य साटोपं परिक्रम्य निपुणं निर्वर्ण्य च । ) वत्से ! एतौ तौ भगवंतावश्विनीकुमारौ स्तः । नैमौ हि कस्यापि परितापं जनयेतां यतः परपरितापहर एवानयोर्धर्मः ।

सुकन्या– तात दृष्टचानया दृष्टौ मया दुष्टाशयाविमौ ।
श्रुताश्च दुःश्रवा वाचोप्यनयोरनयोद्धताः ॥ ७२ ॥

शर्यातिः– वत्से ! मानवलोकवैद्या अप्यात्मलोकनिर्विशेषं पश्यंति लोकमिमं कथं नहीमौ देववैद्यौ भूत्वात्मधर्मात्प्रमाद्येतां । कथ-

मपि न संभवत्तुलामधिरोहति मदंतःकरणं तद्विषये त्वदुक्तिस्त-
न्मन्ये त्वमेनैव वंचितासि नान्यत्।

सुकन्या–हा! इदमपि ममैव दुर्भाग्यदुर्विलसितं यज्जाग्रत्स्वप्नयो-
स्तारतम्येप्यनभिज्ञां गणयंति मां तातपादाः।

शर्यातिः–(स्वगतं।) सत्यं न वत्सा सुकन्या तादृश्यनभिज्ञा
परं कथं न मे मानसं देववैद्यौप्रति कालुष्यमुल्लासयति कि-
मिदमाश्चर्यं।

देववैद्यौ– राजन्नवितथ एव युष्माकं विचारो वत्सायाः सुकन्या-
याश्च।

सुकन्या– (स्वगतं।) अहो वचनमेवैतन्निवेदयति नेमौ यौ पूर्व-
मागतौ ताविति।

शर्यातिः– भगवंतौ देववैद्यौ! तर्हि तत्कारणं निवेद्य कृतार्थममुं
जनं करिष्यथ इत्याशासे।

देववैद्यौ– आर्य महाराज! पवित्रचरित्रे पुत्रि सुकन्ये! श्रूयतां
यदस्ति तत्र मूलम्। अद्य खलु सकलजीवनिकायनिर्मितानां
शुभाशुभानां कर्मणां परिणतफलवर्षणार्थसोदरेण नौ धर्मराजे-
नाज्ञप्तौ यच्च्यवनाश्रमे महामुनेश्च्यवनस्य धर्मपत्नी स्वकीयहृ-
दयदयितारोग्यसिद्ध्यै वत्सरात्प्रभृति युवामुपास्ते।

सुकन्या– ततस्तस्यै वरं प्रयच्छतमिति।

देववैद्यौ– नहि नहि।

शर्यातिः– नहि तस्याः स्वांतपरीक्षां कुरुतमिति।

देववैद्यौ– नहि नहि।

शर्यातिः— तर्हि किमुक्तं ।

देववैद्यौ— तस्यां युवाभ्यां पापा दृष्टिर्विधेयेति । ·

शर्यातिः—अहो! धर्मराजेनाप्येवमाज्ञप्तमिति विस्मयमेति मनो मे।

देववैद्यौ— तत्कारणं पृष्टेन भगवता प्रोक्तं । वत्सौ ! स खलु च्यवनः पूर्वजन्मनि राज्ञो राजसिंहस्य मित्रं ब्राह्मणोभूत् । राजसिंहोपि न केवलं तं मित्रधियाऽपश्यत् किंतु दैवतधिया मनोवाक्कायकर्मभिरहरहरमुं समुपाचरत् । राजसिंहस्य धर्मपत्न्यपि तं पतिप्रेमगौरवात्सोदरनिर्विशेषमगणयत् । तस्यामपि राजपत्न्यां तेनैकदाद्वित्रिनिमेषावधि पापा दृष्टिः पातिता यत्परिणतिरूपामनुभवति स इदानीमंधतां । परं सुकन्ययापि तत्संसर्गात्किमपि तदेनःफलं भोक्तव्यमेव तस्माद्युवाभ्यां पूर्वं तस्यां पापां दृष्टिं विधायानंतरं तदीप्सितं वितरणीयमिति । श्रुत्वाचैतत् आर्य ! नैतदस्मत्कर्मानुरूपं सोपि युष्मदुपदिष्ट इति सबहुमानमप्रमादाभ्यामावाभ्यां परिपाल्यते तन्नैतादृशी नीचतामाचरितुं प्रभवाव इति सांजलिरेवं विज्ञापितो भगवान् संयमनीश्वरः ।

शर्यातिः— ( स्वगतं । ) मनो मे यदमन्यत तत्तथैव जातं ।

सुकन्या— ( स्वगतं । ) मत्प्राणनाथेनाप्येतद्वृत्तांतजालमुक्तमेव ।

शर्यातिः— ( प्रकाशं । ) अथ किं । यौ लोकः पितृधिया पश्येत् यौ च लोकं पुत्रधिया पश्येतां तयोः कथमेतदुचितं स्यात् । ततस्ततः ।

देववैद्यौ— आवयोरेतादृशमचलं निर्बंधं विलोक्य भगवता धर्मरा-

जेन मायामयौ देववैद्यावत्र प्रेषितौ यौ वत्सायाः सुकन्यायाः शापप्राबल्यादचलाविलवलितामुपगतौ। ततः परं धर्मराजाज्ञयैव वरप्रदानायागतौ स्वः।

सुकन्या–(सांजलिबंधं।) भगवंतौ! यद्येवं तर्हि पूर्वागतदेववैद्यधिया मया बहूनि दुर्वचनान्युक्तानि तत्सर्वं क्षंतव्यं।

देववैद्यौ– वत्से क्षांतमेव सर्वं। स्वाभीप्सितं वरमिदानीं वृणीष्व।

सुकन्या– मया विनाशिता बाल्याद्दृष्टिरस्य महामुनेः।
पुनर्भवतु सा दिव्या कृपातो वां कृपार्णवौ ॥ ७३ ॥

देववैद्यौ– भक्त्यानया निर्मलया स्वनाथे
वत्से तपोभिश्च सुदुष्करैस्ते।
न केवलं दृष्टिरमुष्य दिव्या।
वयोपि दिव्यं भविता नवं च ॥ ७४ ॥

(इत्युक्त्वा च्यवनं स्नानाय दिव्यह्रदं नयतः।)

शर्यातिः– वत्से! दृष्टा तयोरप्रतिमा क्षमा! ईदृशाऽनन्यसमक्षमत्वादेव ते दैवतानि गण्यंते। तादृशान्यपि ते वचांसि श्रुत्वापि न तयोर्मनसि रोषलेशोप्यागतः।

सुकन्या– आर्य ममापि मानसं तद्विषय एवानुतापस्तापयति परमज्ञानविहिते का प्रतिक्रिया। अत्र मे मातुरुपदेशः स्मृतिपथमारोहति। साहि प्रतिप्रसंगमेवमुपादिशन्मां यत्

वत्से विमृश्य बहुधा निखिलं विदध्या-
त्किंचित्क्वचिन्न सहसा विदधीत कृत्यम्।

शीतोपचारनियुतैरनिवारणीयं
तापं करोति सहसाऽचरितं हि चित्ते ॥ ७६ ॥

तथापि बालभावसुलभं चापलं मे जनयतितरां मुहुरेवंविधा-मविवेकपरंपरां किं करोमि ।

शर्यातिः– वत्से! निश्चिता भव। न चिंतयंति बालापराधं महा-त्मानः ।

सुकन्या– तात ! अपिस्वित्कुशलं मे मातॄणां ।

शर्यातिः– अस्ति कुशलम् । समागमिष्यति च साप्यत्रैव ।
( ततः प्रविशति सुशीला । )

सुशीला– आयि वत्से ! कुशलं ते ।

सुकन्या– (साश्चर्यानंदं समुत्थाय ।) युष्माकमचिंतितोपनतादर्श-नादद्य विशेषेण मे कुशलं । ( इत्युक्त्वालिंगति । )

शर्यातिः– प्रिये ! कथमहमत्रास्मीत्यवगतं सर्वैः ।

सुशीला– हरिणपोतचरणानुसारिण्या महाभागस्याश्वपदपंक्त्यैव निवेदित एव तदाश्रमप्रवेशस्ततो वयमप्यत्रागताः ।

शर्यातिः– प्रियं मे प्रियं मे ।

सावित्री– मातरुत्तरोत्तरप्रकर्षवती निःसीमानंदवर्षिणी रचनेयं ते ।

मालवी – मया तु त्वरया यथाकथंचिद्रंकितमेतत् ।

अश्वपतिः – अतएवाधिकप्रशंसापात्रम् ।

शत्रुशल्यः – प्रतिप्रवेशं च सदुपदेशसुधालहर्य एव समु-

लसंतीति विशेषतो मानास्पदतामारोहति ।

सुशीला– कतमं तपोवनविभागं भूषयति भगवान्मुनिराजः ।

शर्यातिः– सांप्रतं स्नातुं नदं प्रति गतः ।

सुशीला– वत्से ! कथं मुनिराजेन सह न गतासि त्वम् ।

शर्यातिः– देववैद्याभ्यां सहैव स भगवान् गतः स्नातुं नैकाकी ।

( ततः प्रविशति देववैद्याभ्यां सहितो दिव्यवयोरूपश्च्यवनः । )

शर्यातिः– सुशीलासुकन्याभ्यां सह प्रणमति ।

च्यवनः– राजन् फलंतु युष्माकमभिलाषाः ।
( सुकन्यां प्रति ) राजकन्ये ! पूर्णा ते प्रतिज्ञा सांप्रतं वृणीष्वाभिमतं ते ।

सावित्री – ( स्वगतं । ) इदानीं सुकन्यया मातापित्रोरर्थे किमपि वरणीयं ।

सुकन्या– मदेकसंतानयोरनयोर्मे मातापित्रोर्भवतु सत्पुत्रफलप्राप्तिरिति प्रार्थना मे ।

देववैद्यौ च्यवनश्च– अस्माकं त्रयाणां वचोभिस्ते मातापित्रोस्त्रयः पुत्राः संभविष्यंति ।

शर्यातिः– भगवंतौ देववैद्यौ ! युष्मत्समक्षं मे राजचिन्हान्यमुष्मै मुनिमहेंद्राय समर्पयामि । ( इत्युक्त्वा च्यवनाय खड्गं मुकुटं मौक्तिकमालां चार्पयति ।

च्यवनः– ( सविनयं सर्वं गृहीत्वा । )

गार्यं यावद्भवत्पुत्रा राजकार्यधुरंधराः ।
भविष्यंति मया तावत्स्वङ्गोयमुररीकृत. ॥ ७६ ॥

तत्पुत्रनिर्विशेषप्रेम्णा परिपालितायां प्रजायां निश्चितचित्तैर्भा-
व्यं भवद्भिः ।

**शर्यातिः**— गलितनिखिलचिंतमेव चेत-
स्त्वयि सति दंडधरे मुने मदीयम् ।
स्मरहरचरणं स्मरंस्ततोहं
भुवि भवितास्मि कृतार्थनैकपात्रम् ॥ ७७ ॥

**च्यवनः**— राजकन्ये ! अस्ति तेन्यत्किमपि प्रार्थनीयं ।

**सुकन्या**— ( सांजलिबंधमुत्थाय । ) प्राणनाथ ! विदिताशेषवेदि-
तव्यानामपि युष्माकमग्रे बालभावसुलभलाघवा मतिर्मां मुख-
रयत्येतत्प्रार्थयितुं तदेनमविवेकं क्षमिष्यंत्यत्र भवंतो भवंत
इत्याशासे ।

**च्यवनः**— राजकन्ये ! निःशंकमभिधीयतां ।

**सुकन्या**— प्राणनाथ ! नाविदितमेतत्प्रायो युष्माकं यदास्मिन्
जगत्यक्षरद्वयमात्रघटितस्यापि वैद्यशब्दस्यार्थगांभीर्यं न केना-
पि वक्तुं शक्यत इति । चिरं चिंतनीयं चेतसा योऽयं मानुष्यो
देहश्चतुरशीतिलक्षजन्मनामंतेप्यगण्यैः पुण्यैरुपलभ्यते येन
धर्मः संचीयते येनार्थ उपार्ज्यते येन काम उपभुज्यते येन च
मोक्षलक्ष्मीरपि संपाद्यते किंबहुनैहिकामुष्मिकानेकविधनिःश्रे-
यसानां मूलं च य एव गण्यते तमिमं कायकल्पद्रुमं मूलत उन्मू-
लयितुं प्रयतंते परपराद्धप्रपहृतसुखमोगाः समर्पितार्तियोगा
रोगाः । तैस्तैश्च साधिभिर्व्याधिभिर्ग्रस्ते वपुषि न मातृबलं न

पितृबलं न भ्रातृबलं न स्वसृबलं न पितृव्यबलं न मातुलबलं न पुत्रबलं न कलत्रबलं न सुहृद्बलं न संबंधिबलं न बंधुबलं न बांधवबलं न स्नेहिबलं न मित्रबलं वा कामप्युपयोगितामुपगच्छति । किंतु कदाचित्सर्वेपि ते हितकारिणोपि प्रत्युताहितकारिणो भवंति रोगातुरस्य । तस्मिन् समये तु सद्वैद्य एव मातृतां पितृतां भ्रातृतां सन्मित्रतां सद्बंधुतां सद्बांधवतां च समुद्वहतीति केषामाविदितं । किंचेश्वरप्रसादात्प्राप्तस्यास्य मानुष्यजन्मनः साफल्यं हि धर्माचरणमूलं धर्माचरणं शारीरारोग्याधीनं शारीरारोग्यं च सद्वैद्यसत्संमतिस्वाधीनमिति जगद्विदितमेव । प्रख्याताः प्रेक्षावंतो विख्याताः शीघ्रकवयः शौर्यशेवधयो वीरा धैर्यनिधयो धीरा गांभीर्यमूर्तयो गंभीरा अगाधमंत्रशक्तयो मंत्रिणो निःसीमवक्तृत्वशक्तयो वक्तारश्च तावदेव स्वस्वकृत्येषु निष्प्रतिमां जयश्रियमुपलभंते यावद्वपुषि जागर्ति सुभाग्यवद्भोग्यमारोग्यं । यदा यदा तु वपुष्याविशत्यनारोग्यं तदा तदा प्रज्ञावतां प्रज्ञा शीघ्रकवीनां शक्ति धीराणां धीरता वीराणां वीरता गंभीराणां गंभीरता मंत्रिणां मंत्रशक्तिर्वक्तॄणां वक्तृत्वशक्तिश्च न जाने प्रपलाय्य क्व निलीयत इति । यो यो यद्यत् स्फुरत्यारोग्ये करोति कृत्यं तत्तत्सहस्रांशमपि न विधातुं प्रभवत्यनारोग्यग्रस्तस्वांततयाऽस्तोकशोकशल्यो लोकः । एतत्तु केवलं साधारणानारोग्यभोग्यानामुपवर्णितं चरितं । ये तु पुनर्महारोगग्रहग्रस्ततयापांगगणनायां गण्यंते तेषां तु स्वांतं प्रतिदिनं प्रतिप्रहरं प्रतिक्षणं च कानि कानि दुःखानि के के

संतापाश्च समुद्भवंत्येतद्विषये युष्माकमपि स्वांतं नानभिज्ञं। यर्हि साधारणानारोग्यनिराकरणकारिणेपि रोगहारिणे नोर्व-रावलयमप्यधिकं मन्यंतेर्पयितुं कृतज्ञशिरोमणयस्तर्हि दयार्द्र-हृदयाभ्यां याभ्यामाभ्यां देववैद्याभ्यामपाकृता कृपातोऽपांगता भगवतस्ताभ्यां किमर्पणीयमित्येतद्विषये तु मनो मे मूढताम-धिगच्छति बुद्धिर्न बोधपदवीमवतरति रसज्ञा च लज्जाजल-धिनिमग्नेव न वक्तुं प्रभवति। नाथ! न जगत्त्रयेपि तादृशं वस्तु विलोकयामि यत्समर्प्यानयोरनृणौ भवावः। आनृण्यं तु तयोर्ज-न्मसहस्रैरपि कर्तुमशक्यमेव तदेतत्सर्वस्वमर्पयित्वा यावज्जीवं तयोश्चरणपरिचर्यापरायणाभ्यां भाव्यमावाभ्यां नान्या प्रति-क्रियेति मन्येहं।

च्यवनः– (सहर्षं।)

युक्तं प्रिये सकलमेव शुभं त्वदुक्तं<br>
ताभ्यां जनोयमजिनांबरमात्रशेषम्।<br>
सर्वस्वमर्पयितुमस्ति निबद्धबुद्धि-<br>
र्दास्यं च कर्तुमनयोरिह यावदायुः ॥७८॥

(इत्युक्त्वा मौलिमालाखड्गादीनि राजचिन्हानि समर्पयितुं गच्छति।)

सावित्री–धन्येयमनयोरुदाराशयता दंपत्योः। (इत्युक्त्वा स्वकंठान्मुक्ताहारद्वयमुत्तार्य सुकन्याच्यवनयोः कंठेर्पयति।

देववैद्यौ– मुनिराज! सार्वभौमधार्योयं मौलि र्माला खड्गश्च त्वा-

मेव भूपतु राज्यसुखानि च युवामेवानुभवतां । युवयोर्भक्तिरे-वेयमस्मन्मनःपरितोषायालं ।

सुकन्या—( सांजलिबंधं । ) भगवंतौ ! सत्यमेवैतत् । यावज्जीवम-विस्मर्योपकाराभ्यां जनुःसहस्रैरप्यप्रतिविधेयप्रसादाभ्यां युवा-भ्यां किमेतदर्प्यते । प्राणार्पणेनापि नानृणता कर्तुं शक्यते यु-वयोस्तदेतदंगीकारानुग्रहेण कृतकृत्यान् करिष्यथास्मानित्या-शास्महे ।

च्यवनः— भगवंतौ ! यदि न भौममोगस्तुच्छतयाभिरोचते युवा-भ्यां तर्हि युष्मत्प्रसादान्महेंद्रपदमप्यर्पयितुमप्रतिहतैव मे तपः-शक्तिः ।

देववैद्यौ— ( स्मितमभिनीय । ) यद्येवमाग्रहो वां तर्हि शृणुतं ।

नेयं महींद्र माहेंद्रं पदमिच्छति नौ मतिः ।
महेंद्ररुद्धे किंत्वस्मद्यज्ञभागे स्पृहावहा ॥ ७९ ॥

च्यवनः— ( सोत्साहं । ) यद्येवं तर्ह्येषा मे प्रतिज्ञा ।

शर्यातेरस्य राजर्षेर्यज्ञे यज्ञेशसन्निधौ ।
इंद्रे यमे च वरुणे कुबेरेपि च पश्यति ॥ ८० ॥
न यज्ञभागभोक्तारौ युवां कर्तास्म्यहं यदि ।
तर्हि बर्हिर्मुखश्रेष्ठौ प्रवेक्ष्यामि हुताशनम् ॥ ८१ ॥

( इत्युक्त्वा प्रणमति । )

देववैद्यौ— अस्तु स्वस्ति समस्तानां युष्माकं । ( इत्युक्त्वा निष्क्रांतौ । )

च्यवनः– प्रिये ! किमन्यत्तेऽभिमतमाचरेयं ।

सुकन्या– नाथ ! किमतोऽप्यन्यदभिमतं मे ।

दृष्टिर्भगवता लब्धा स्वस्थयाऽवस्थया सह ।
पुत्रान्प्राप्स्यति तातो मे स्वांशं च स्वाश्रिकित्सकौ ॥८२॥

तथापीदमस्तु ।

पतिव्रताः प्रतिदिनं पतिप्रेमपरायणाः ।
पतिप्रसादात्पश्यंतु पराः श्रेयःपरंपराः ॥ ८३ ॥

सूत्रधारः– ( प्रविश्य ) भोभोः सभ्याः ! दृष्टं युष्माभिर्य-दनया राजकन्यया स्वकीयाप्रतिमपातिव्रत्यप्रभावेण कीदृशी श्रेयःसंपत्समुपार्जितेति । सर्वमेतत्सत्कुलकामिनीभिर्न कदाचि-द्विस्मरणीयं ।

अश्वपतिमालवीसावित्रीप्रधानाः– (सूत्रधाराय पा-रितोषिकमर्पयंति ।)

सावित्री–( समुत्थाय । )इदानीं मन्मात्रा रूपकरूपेण य-दुपदिष्टं तच्छिरसा हृदयेन च संधार्यैकमपि विज्ञापयामि।

मातः पितर्वा कुललब्धजन्मा
नायं जनस्तु प्रचलेत्स्वधर्मात् ।
प्राणेषु गच्छत्स्विति निर्विशंकं
ज्ञात्वा मनः कार्यमपास्तचिंतम् ॥ १६ ॥

अश्वपतिमालवी च– वत्से ! त्वद्विषये निश्चिंतमेव नौ चेतः ।

मालवी– प्राणनाथ ! उदयाभिमुखो भगवान् सहस्रभानुस्तद्वत्सां सावित्रीं देव्यै शैव्यायै समर्पयितुं गच्छामि ।

अश्वपतिः– गच्छतु देवी । वयमपि क्षणानंतरमार्यं राजर्षिं द्रष्टुमागमिष्यामः । ( इति निष्क्रांताः सर्वे । )

इति सगर्भांकः पंचमोंकः ॥

---

श्रीविठ्ठलात्मजनुपोद्धशशांकमौले-
र्दासस्य वर्यगुरुकेशवधर्मसूनोः ।
एषा कृतिर्मम तु शंकरलालवधो-
र्गौरीगिरीशपदयोः कुसुमांजलिः स्तात् ॥ १ ॥

## ॥ अथ षष्ठोंकः ॥



नेपथ्ये– न त्वं धरा न पवनो न जलं न तेजो
न व्योम नाप्यसि च तत्समुदायरूपः ।
रे जीव जीव शिवरूपतमोपि कस्मा-
न्मोहान्मुहुर्भ्रमसि संसृतिकालजाले ॥ १ ॥
ज्ञानेंद्रियाणि न भवानसवो न च त्वं
कर्मेंद्रियाणि न च तद्विषया न च त्वं । रे जीव० ॥२॥
न त्वं सखेसि मुखजो न च बाहुजो वा
नैवोरुजश्चरणजोपि परस्य पुंसः । रे जीव० ॥ ३ ॥
कर्तापि न त्वमसि नापि च हंत भोक्ता
नोच्चावचत्वमपि च स्फुरति त्वयीदं । रे जीव०॥४॥
माता न तेस्ति न पितापि न चापि पत्नी
मित्रादयोपि नहि ते न तथैव पुत्राः । रेजीव० ॥५॥
मेदोस्थिमांसरुधिरैकनिधिर्नृदेहो
नेहोचिताऽशुचितरे रुचिरीदृशी ते । रे जीव० ॥६॥
स त्वं जनुर्मरणवान्न नरो न नारी
न त्वं शिशुर्न च युवा स्थविरश्च न त्वं । रे जीव०॥७॥
त्वं त्वेकमद्वयमनादिकिमप्यचिंत्य-
मानंदकंदमयमस्यमलं विशोकम् ।

सच्चित्स्वरूपमत एव न ते भवेस्मिन्
मोहः सखे समुचितोऽबुधबुद्धिरम्ये ॥ ८ ॥
( ततः प्रविशति शैब्यासहितो द्युमत्सेन. )

द्युमत्सेनः– प्रिये ! महात्मनां सहवासात्कान्यप्यचिंत्यानि सुखानि समुद्भवंति । इदानीमेतैतैर्यद्गीतं तदर्थगांभीर्यं कीदृशमस्ति श्रुतं देव्या ।

शैब्या– अथ किम् । महात्मनां स्वैरकथापि शास्त्राणीति लोकोक्तिर्न मृषा ।

द्युमत्सेनः– देवि ! मन्ये संनिहितः सूर्योदय इति ।
- पश्येतः श्रमवारिचारिसरसस्तीरे मरालैः कृतो
मंजीरस्वनमंजुलो ध्वनिरयं श्रोत्रातिथिर्जायते ।
एताश्चाश्रमपक्षिणां कलगिरश्चैते रथांगारवा
श्चेतश्चोरचकोरमंडलरुतं चैतन्मुहुर्मोहनम् ॥ ९ ॥
सरससरसिजालीगंधशाली समीरः
सविनय इव मंदं मंदमायाति चायम् ।
तदुदयगिरिमौलिं मंडयत्यंशुजालै-
र्दिनमणिरिति मन्ये मंगलं मंगलानाम् ॥ १० ॥

शैब्या–आर्यपुत्र ! भूतार्थ एव वस्तर्कः । प्रभातप्रायायामपि शर्वर्यां कथं नायाता वत्सा सावित्रीति चिंताकुलं मे चेतः ।

द्युमत्सेनः– देवि ! मातापितृसंनिहितायां तस्यां कश्चिन्तावसरः ।

शैव्या– नाथ ! अहितशतशंकाकुलानि सुहृदां चेतांसीति नाविदितं वः।

द्युमत्सेनः– अवितथमेतत्। तर्हि वत्सायाः कुशलप्रवृत्त्युपलब्धये देवव्रतं प्रेषयावः। ( इति देवव्रतमाह्वयति। )

देवव्रतः– ( प्रविश्य। ) आज्ञापयतु तातः।

द्युमत्सेनः–वत्स ! महाराजस्याश्वपतेः सेनासन्निवेशं गत्वा मद्वचसा दंपत्योस्तयोरनामयप्रश्नं विधायानंतरं वत्सायाः साविञ्याः कुशलं प्रष्टव्यं।

देवव्रतः–यथाज्ञा तातचरणानां। ( इत्युक्त्वा बहिर्निष्क्रम्य पुनः प्रविश्य च। ) आर्ये मालवीसाविञ्यौ तु सांप्रतमिहैवागते।

( प्रविशति सावित्रीसहिता मालवी। )

मालवी– देवि ! एष मे मालव्याः प्रणामः।

शैव्या–(समुत्थाय।) प्रियसखि मालवि! समागता किं। युष्मत्समीप एव प्रेषितोयं मया देवव्रतः।

मालवी– कृपाचिन्हमेतत्।

सावित्री– मातः! प्रणमाम्यहं सावित्री।

शैव्या– वत्से ! अखंडसौभाग्यसंपद्भव।

मालवी-देवि! नाभ्युत्थानमुचितं ते। (इत्युक्त्वा शैव्यामासनं प्रत्युपवेशयति।)

शैव्या– देवि मालवि साविञ्या पावित्र्यास्पदचित्तया।
त्रियामायुगमायासीद्विना मे वत्सयानया ॥ ११ ॥

किंवर्णयामि विनयं किं वियां किमुतार्जवम् ।
तस्या अप्रतिमां किं वा गुरुभक्तिमलौकिकीम् ॥ १२ ॥
अथवा त्वादृशजननीजनजठरजन्मनः कन्यारत्नस्यैतादृशलोकोत्तरगुणगणशालित्वमपि न विस्मयकरमिति मन्येहं ।

मालवी– देवि ! बालभावसुलभापराधा खलु वत्सा सावित्री परं कृपामृतप्रपायमानमानसाया देव्या एव सेयं महाशयता । प्रायोमहाशया हि परमाणुपरिमितानपि परगुणान् गिरिवरगरिमगरिम्णः कुर्वंति । किंच दूषणविलोकनेष्वंधंकरिष्णुः स्नेहप्रसरो गुणविलोकनेष्वंधंकरिष्णुश्च द्वेषप्रसर इति लोकोक्त्यनुसारेण सावित्रीप्रविष्ठं प्रेमैव ते कथमिव तस्या दूषणं दर्शयेत् ।

शैब्या–मालवि ! नेदं मयोपचारवच उच्यते । सत्यं विरलानि सावित्रीसदृशानि कन्यारत्नानि ।

गर्भैश्वर्यवती भूत्वा कान्या कन्या नरेशितुः ।
कांतारवासक्लेशेपि नौदास्यलेशमावहेत् ॥ १३ ॥

दूरेस्तु वनवासव्यसनवार्तापि किंतु स्वर्गसमृद्धिप्रतिस्पर्द्धिन्यपि सुखसमूहे कति कति नरेंद्रकन्या मातापितृविरहव्यथया दुःसहदुःखधियो न प्रभवंति । सावित्री तु महाराजकुलसंभवापि प्राज्यराज्यसुखसंपद्विद्धापि बहुदिनपरिचितवनवासव्यसनेव निरौदास्यलेशा सोत्साहं सस्नेहं सभक्त्युद्रेकं चात्र परिचरत्यस्मान् । किंबहुना-

वीक्ष्य विश्वेश्वरोदेवस्तां स्तांल्लोकोत्तरान् गुणान् ।
तस्यै दिशत्वनुदिनं परां श्रेयःपरंपराम् ॥ १४ ॥

मालवी–देवि ! युष्मत्परिचर्या हि परमो धर्मस्तस्यास्ततस्त-
स्मिन्नप्रमत्तयैव भाव्यं तया ।

शैव्या– न कदाचिदपि तत्र सा प्रमाद्यतीति प्रमोदास्पदं ।

द्युमत्सेनः– देवि शैव्ये! ।

शैव्या– ( सांजलिबंधं ) आज्ञापयत्वार्यपुत्रः ।

द्युमत्सेनः– सुधांबुधिसमुद्भूतः सुधां वर्षेत्सुधांशुकः ।
किं तत्र विस्मयस्थानं तस्यायं सहजो गुणः ॥ १५ ॥

एवं महाराजस्याश्वपतेर्देव्या मालव्याश्चौरसमजायां वत्सा-
यां सावित्र्यां सर्वेपि ते सहजा एव गुणाः समुल्लसंति कि-
मिव तत्र चित्रं मन्यसे । तदतःपरं मनो मे सन्मित्रदर्शना-
योत्कंठते ।

शैव्या–नाथ ! किं महाराजस्याश्वपतेः समीपं गंतुमिच्छा वः।

द्युमत्सेनः– अथ किम् ।

मालवी–प्रियसखि शैव्या! त एवात्रागमिष्यंत्यार्यराजर्षेर्द-
र्शनाय तत्रार्यैस्तत्र गंतुं श्रमः स्वीकार्यः ।

( ततः प्रविशत्यश्वपतिः प्रधानौ च ।)

अश्वपतिः– आर्यराजर्षेभिवंदेहं ।

द्युमत्सेनः–आगम्यतां प्रियमित्र आगम्यतां। अधुनैवास्मरं
युष्मान् ।

प्रधानौ– आर्य राजर्षे! प्रणमावः । (इति प्रणमतः ।)

द्युमत्सेनः– शत्रुशल्य! वीरमित्र! इहोपविश्यतां।
अश्वपतिः– युष्मत्समागमसुखेन न राज्यसौख्यं
स्वप्नेऽपि चिंतयति चित्तमिदं मदीयम्।
किंतु प्रजा मम विनात्र मया दयाब्धे
व्यग्रा भविष्यति ततः स्वपुरं प्रयामि ॥ १६ ॥
द्युमत्सेनः– (क्षणं विमृश्य सनिश्वासं सास्रं च)
तव विरहविषानलासहिष्णु
प्रियसख यद्यपि मानसं मदीयम्।
स्पृहयति हि निजप्रजाभिरक्षा-
भिधवरधर्मपरं तथापि त्वाम् ॥ १७ ॥
केवलं प्रणामसहस्रार्पणपूर्वं प्रार्थयामि परमेश्वरं युष्मदी-
यपुनःसमागमाल्हादालभ्यलाभलब्धये।
अश्वपतिः– अहमपि भूयोभूयः प्रणम्य परमेश्वरं तदेव
प्रार्थयामि।
(शैब्यां प्रति।) देवि! एष मे प्रयाणप्रणामः। सांप्रतमहं
गंतुमिच्छामि निजां राजधानीं।
शैब्या– वत्स! शिवाः संतु ते पंथानः।
मालवी– देवि! एषा मे चरमा प्रणतिः।
शैब्या–वर्ततां वर्त्मनि शिवं ते। वत्स अश्वपते! सखि मालवि!
वत्सायाः सावित्र्या न कापि युवाभ्यां चिंता विधेया।
मालवी– देवि! त्वयि राजर्षौ चास्मिन् जाग्रति सति त-
दीयप्रियहितचिंतनाय का नश्चिंता तथापि केवल-

मेतदेव प्रार्थयामहे यदस्या बालभावसुलभा अपराधाः क्षंतव्या इति ।

शैब्या– एतदपि वक्तव्यं किम् ?

बालापराधं गुरवः कदाचि-
द्गृह्णंति किं मालवि ये दयार्द्राः ॥
तत्राप्यसौ ते तनयाऽपराधं
कुर्यादिदं संभवति स्म किंवा ॥ १८ ॥

अश्वपतिः– आर्य राजर्षे !

न कोपि जन्मना जन्मी गुणवानिह जायते ।
गुरूपदेशात्सर्वेपि जायंते गुणिनां गुणाः ॥ १९ ॥

नैतदविदितं नः ।

द्युमत्सेनः– प्रियमित्र ! एवमेतत् । गुरूपदेशो हि गुणरत्नानां रोहणगिरिः ।

मालवी– ( सबाष्पकंठं ) वत्सायां सावित्र्यां त्वमत्तोप्यधिकवात्सल्यविवशौ युवां ततो न तद्विषये किमपि वक्तुमर्ह तथापि यदिदमुच्यते तत्रोपालंभभाजनतामभिवद्त्यभिनयस्तद्विरह एव ।

अश्वपतिः– आर्यराजर्षे ! नैतदविदितं नः । क्व गतो वत्सः सत्यवान् ।

द्युमत्सेनः– कुशकुसुमसमिन्मूलानि बिल्वदलानि चाहर्तुं गतोस्ति परमुपस्थितस्तदागमनावसरः ।

( ततः प्रविशति सत्यवान् । )

सत्यवान्–(फलमूलादिकमधः संस्थाप्य) पितरौ ! प्रणमामि । ( इति प्रणमति । )

शैव्याद्युमत्सेनौ– कल्याणं ते कलयतु परमेश्वरः । अद्यैव महाराजः स्मरणमकारोत्ते ।

सत्यवान्– ( सविनयं अश्वपतिमति । अंगुल्या शैव्याद्युमत्सेनौ निर्दिश्य । ) आर्यौ ! रूपांतरमुपगताविमौ मातापितरौ युवामभिवंदेहं ।

अश्वपतिः– वत्स ! विजयस्व ।

मालवी– वत्स ! लभस्वाभ्युदयसिद्धीः ।

सत्यवान्– यदैव युष्माकं मयि निपतिता दयार्द्रा दृष्टयस्तदैव सिद्धा मे विजयाभ्युदयसिद्धिः । परमद्य युष्माकं स्मरणपथमधिरूढोयं जनस्तन्निदानमप्रतिमं वः प्रेमैवान्यद्वेति ज्ञातुमुत्कंठते स्वांतं मे ।

अश्वपतिः– ( स्वगतं । ) काप्यन्यैव मधुरता सत्यवद्वचसां । ( प्रकाशं । ) वत्स ! तन्निदानं त्वेतदेव यदहं स्वीयां राजधानीं प्रति गंतुमुत्सुकोस्मि ।

सत्यवान्– ( स्वगतं । ) हा सुखमयसमयसमाप्तिः समा-

गता। महाराजस्यास्य वियोगेनोदासीनेषु तातपादेषु शून्यमिवाश्रमपदमिदं भविष्यति परं का प्रतिक्रिया। (प्रकाशं।)

संभूषयिष्यंति भवंत एनं
यथाश्रमं चेत्कतिचिह्निनानि।
अनुग्रहस्तर्हि न तातपादा
युष्मद्वियोगं यदमी सहंते ॥ २० ॥

किंच योयं युष्मत्समागमानंतरमनुभूयते तैरानंदः स न कदाचिन्मया पूर्वं दृष्टः।

अश्वपतिः– वत्स! मिथस्तुल्यमेतत्।

शत्रुशल्यः–राजकुमार! यथार्था महाराजोक्तिः। दंपत्योरनयोस्तपोवनेस्मिन् य आनंदो दृश्यते स न दृष्टः पूर्वमस्माभिः।

वीरमित्रः– अस्मिन्मास एव स लब्धजन्मानंद इति मंतव्यं।

सत्यवान्– अतएव प्रार्थयामि महाराजं। य आनंदोस्मिन्मासेव प्राप्तजन्मा तस्याभिरक्षणाभिवृद्ध्यभिपोषणानि चावश्यमेव कर्तव्यानि। तच्च सर्वं महाराजस्यात्रावस्थानेनैव भविष्यतीति मन्येहं।

अश्वपतिः– वत्स! ममापि मानसमत्र वस्तुं सस्पृहमेव परं किं करोमि।

हेभद्रमुख मद्रोपि मद्वियोगव्यथाकुलः ।
हृद्रोगार्तइवात्यंतं ताम्यत्यनुदिनोदयम् ॥ २१ ॥

किंच प्रजाभिरेव पुत्रवंतः पृथ्वीपाला इति नाविदितं वत्सस्य ।

सत्यवान्– आर्य ! न यदि युष्मादृशाः प्रजास्वेतादृशप्रेमपरवशा भवेयुस्तर्हि राजधर्मोपि हीयेत तत्सुखं गम्यताम्। किंच योग्यायां परिचर्यायां स्मर्योयं जन इति प्रार्थयामि।

अश्वपतिः– क्षणमपि न विस्मरिष्यामि वत्सं ।

सत्यवान्– सोयं महाननुग्रहः ।

अश्वपतिः– वत्स ! तवाग्रे पितृभक्तिविषये यत्किमपि वक्तव्यं तत्पुनरुक्तमिव प्रतिभाति यतो विरलाः किलाखिलावनिवलयेपि भवादृशाः पितृभक्तास्तथापि तद्विषयोपदेशाधिकारी वत्स एवेति विचार्य किमपि वक्तुमुत्कंठते स्वांतं मे।

सत्यवान्– आर्य ! युष्मादृशामार्याणां धर्म एवायं । सकलसद्धर्मकल्पद्रुमांकुराणामभ्युदयकरो गुरुजनोपदेशामृतसेक एव ततो युष्मत्कृतमुपकारं श्रोतुमातुरतर एवायं जनः ।

अश्वपतिः– प्रायो नैतदविदितं कल्याणाभिनिवेशिनो वत्सस्य यन्मातापितरौ हि परमं दैवतं पुत्राणामिति । ये ये पुत्राः कृतान्यविस्मर्योपकारायाः मातुः कल्पायुपाप्यम(?)तिक्रियप्रेम्णः पितुश्च परित्यज्य परिचर्या जपतपस्तीर्थाटनेश्वराराधनध्यानदानादीनि श्रेयःसाधनानि परिशील-

यंति तत्तदखिलं तेषां निष्फलतामेवावलंबते न ततस्ते श्रेयःसिद्धीर्न ततस्ते सत्कीर्तिसंपदं न ततस्ते परमेश्वर-प्रसादपात्रतां चाधिगच्छंति।

सत्यवान्– ( स्वगतं। ) महाराजस्यास्य सर्वाणि वचांसि शास्त्राण्येवेति मन्ये।

अश्वपतिः– निर्मलतरयशश्चंद्रेण श्रीरामचंद्रेण श्रीशंकर-प्रसादप्राप्तपरशुना श्रीपरशुरामेण वैरिकुलसरःशोषण-ग्रीष्मेण श्रीभीष्मेण सदाभ्युदयवद्धतृष्णेन श्रीकृष्णेन स्वधर्मप्रवणेन श्रवणेन अन्यैश्च तादृशैरेव महात्मभिः पित्राज्ञापरिपालनं पितृचरणपरिचरणं पितृस्वांतपरितो-षश्च कया कया रीत्या विहितोस्ति ततश्च ते कीदृशं विजयं कीदृशमभ्युदयं कीदृशीं सत्कीर्तिं कीदृशीं कल्याणपरंपरां चाध्यगच्छन्नित्येतन्नाविदितं ते।

शत्रुशल्यः– वक्ता हितोपदेशानां महाराजसमोस्ति कः।

वीरमित्रः– श्रोतापि चोपदेशानां सत्यवत्सदृशोस्ति कः।

अश्वपतिः– ते खलु निखिललोकमंगलकरं गंगाजलमपहा-य मृगतृष्णातरंगिणीमभिधावंति ते खलु सुरपुरसंपदम-पहाय गंधर्वपुरमुपसर्तुमिच्छंति ते खलु नंदनवनचंदनप-ल्लवान्यपहाय व्योमवल्लीपल्लवान्यभिलषंति ये मातापितृ-स्वरूपं परमं दैवतमपहाय दैवतांतरोपासनाप्रयासवंत इतस्ततो भ्रमंति। किंच स्थार्यं हि सर्वसद्गुणावरणं सर्व-प्रेमापहरणं सर्वाप्रीतिकरणं च। पिशाच्यावेशविवशमिव

जराग्रस्तं प्रशस्तमपि जनं न बंधवो बहु मन्यंते न सुहृदः सुहृद्धिया पश्यंति न विलासिन्योप्यभिलषंति । तस्यां च विषमायां वेलायां न विना सत्पुत्रं किमप्यन्यच्छरणमिसाराजरकं समस्तोपि लोकस्तोकसुखदर्शनजन्यमस्तोकसुखमभिलषन् निष्प्रतिमां प्रयत्नपरंपरामाचरति । सर्वा चापत्यमात्री तल्लालनपालनपोषणानि रचयति स्वयमरसमस्वादमपिभुक्त्वा पुत्राय सरसं स्वादवचार्पयति स्वयं जीर्णानि विशीर्णानि चांबराणि संधार्य पुत्रायोत्तमोत्तमान्यंबराणि समर्पयति किं बहुना स्वयमसंख्यान्यपि दुःखान्यनुभूय पुत्राय सुखानि समर्पयति नैतावदेव मरणमपि तदर्थमंगीकरोति। तादृशानिष्प्रतिमनिःसीमवात्सल्यविवशांतःकरणानां मातृचरणानां पितृचराणानां च मर्त्योऽमर्त्यायुषाप्यनृणो भवितुं तु न शक्तस्तथावज्जीवमभिन्नमनोवाक्कायकर्मभिस्तदाज्ञापरिपालनीया तदीयांतःकरणपरितोषपोषणं विधेयं परदैवतधिया च तदीयचरणपरिचर्या रचनीयेति सत्पुत्राणां प्रथमं कृत्यं परमो धर्मो निःश्रेयससाधनसर्वस्वं च।

सत्यवान्– आर्य !

उपकारसहस्राणि संत्येव श्रीमतां मयि।
उपदेशमिमं मन्ये तेभ्योप्यतिमहत्तरम् ॥ २२॥

विरला एव युष्मादृशाः प्रियहितोपदेशार्पणप्रणयिन आर्याः।

अश्वपतिः- उत्तमोत्तममपीमं स्वधर्मं परित्यज्य ये केचन पामरा नरा वानरा इवाविवेकिनो यौवनमदेन विद्यामदेन द्रविणमदेन प्रतिष्ठामदेन चोन्मत्तमनसो न तान्परिचरंति न तदाज्ञां शृण्वंति न तदुपकारान् स्मरंति च ते हि न तेषां पुत्राः किंतु रुधिरपानमात्रजन्मजीवनफलाः शारीरमलसंभवा यूकालिक्षाप्रभृतय इव नराकृतयः कीटा एवेति मन्येहं । दूरेस्तु मातापित्राज्ञानुसरणपरिचर्याचरणवार्तापि प्रत्युत केचन कुपुत्रास्तु नक्तंदिवं मातापित्रोरंतःकरणमुपायसहस्रैः संताप्य कृतार्थमिवात्मानं मन्यंते ।

हाधिक् तेषां तु दुष्प्रज्ञां हाधिक् तेषां पराक्रमम् ।
हाधिक् तेषां जन्म निंद्यं धिग्धिक् तेषां च जीवितम् ।२३।

वत्स ! त्वं तु मूर्तः पुत्रधर्मोसीति किमधिकं वदामि तथापि भूयोभूय एवैवमेभ्यर्थना यदिमौ वृद्धावंधौ च दंपती परमेश्वरभक्त्या परिचरेः प्रतिदिनं प्रतियामं प्रतिवेलं प्रतिक्षणं च मा तदुपकारान् विस्मरेः निर्व्यलीकेन मनसा वचसा कर्मणा च तदाज्ञां परिपालयेः । ( सावित्रींप्रति ।) वत्से ! यावान् यादृशश्च वत्सस्य सत्यवतोस्त्वेतयोः परिचर्यायां धर्मस्तावान् तादृशस्ततोप्यधिको वा तवाप्यस्ति धर्मस्तत्सेवायां । एतयोः सेवयैवाभ्युदयोभिवृद्धिर्जन्मजीवितसाफल्यं च युवयोर्भविष्यतीत्यसंशयमवगंतव्यं ।

सत्यवान्– आर्य ! शास्त्रोपदेशनिर्विशेषं युष्मत्कृतममुमुपदेशं शिरसा हृदयेन च वहामि यावज्जीवं तदनुसारेण चानुदिनं वर्तिष्ये ।

सावित्री– पुण्यां पवित्रां चेमां तातपादानामाज्ञां न स्वप्नेऽपि विस्मरिष्यामि ।

अश्वपतिः– उचितमेवैतद्युवयोः ।

मालवी– वत्सौ ! भक्तिभरविहिता गुरुशुश्रूषा कामदुघा भविष्यति ।

अश्वपतिः– आर्य राजर्षे ! आर्ये देवि ! अनुजानीतं मां निजराजधानीगमनाय ।

द्युमत्सेनः शैव्या च–

शिवोस्तु पंथा युष्माकं परेशदयया पुनः ।
स कोपि दिवसो भूयाद्यत्र युष्मत्समागमः ॥ २४ ॥

मालवी– देवि ! अहमपि प्रयाणप्रणामार्पणपूर्वं विज्ञापयामि यत्कतिपयदिवसपरिचितसहवाससंभवाः क्षंतव्या मेऽपराधा इति ।

शैव्या– प्रियसखि मालवि ! अक्षीणसौभाग्या भूयाः। अपराधस्तु देव्याः स एव यदावयोरपांगयोः स्वांतं बलादपहृत्य गच्छसि ।

प्रधानौ– आर्य राजर्षे ! युष्माकं सेवकपरमाणू आवां प्रणमावः ।

द्युमत्सेनः– पवित्र शत्रुशल्य ! वीरमित्र ! महाराजसाश्व-
पतेः सेवायामनुदिनमप्रमत्ताभ्यां भाव्यं।
सर्वे– ( गंतुमिच्छंति। )
शैव्याद्युमत्सेनौ– ( अनुगंतुमुत्तिष्ठतः। )
अश्वपतिः– आर्य आर्य ! अलमलमत्यायासेन।
द्युमत्सेनः– प्रियमित्र ! क इवायासोयं। तावंत्यपि पदानि
युष्माभिः सह संचरतो मे हर्षपर्वाणि भविष्यंति।
अश्वपतिः– यथेच्छा श्रीमतां। ( सर्वे निष्क्रांताः। )
( ततः प्रविशति मालतीमाधवीभ्यां सहिता सावित्री। )
माधवी– हला सावित्रि ! व्यतीतायां रात्रौ सुकन्याचरि-
त्रप्रेक्षणके प्रेक्षितयोर्ललितालीलावत्योर्दशाद्यानुभूयत
आवाभ्यां। न मातापित्रोरग्रे त्रपया वक्तुं शक्नुवः परं
नेतः पदात्पदमपि चलतश्चरणौ नौ। तथाहि।

न मनो निजमातृपादपद्मे
न च तातांघ्रिसरोजसेवने वा।
सुहृदामपि संगमेन वा नौ

**सावित्री**– क इव।

**मालती**– वक्तव्यं प्रियसख्या मातापित्रोरग्रे यत्त्वविना मालतीमाधवीभ्यां ममात्र किमपि रोचिष्यत इति।

**सावित्री**– अदीर्घदृष्टिदृष्टोयं विचारो वां। प्रथमं तु नैवं मया शक्यं वक्तुम्। यदि कदाचिद्वदेयमेवं तथापि न माता युवामजातपाणिग्रहणेत्र स्थापयिष्यति। मत्प्रेमपरवशा स्थापयेद्वा तथाप्येतत्त्वस्माभिरेव चिंतनीयं यन्मदेकजीवनसर्वस्वाया अंबाया मद्विरहे विना युवां किं शरणमिति। ततो मातृसमीपे युष्मात्स्थितिरेव मातापित्रो मम च स्वांतसंतोषकरी नात्र स्थिति र्यन्मयीव स्निह्यत्यंबा युवयोः।

**मालती**– हला सावित्रि! आज्ञां ते शिरसा वहिष्यावः परं विचार्यमाणे विना प्रियसख्या कथं तत्र गंतुं शक्नुव इति वेपते हृदयं नौ। किंचैतदत्र भवत्या भवत्यैव विचार्यम्।

> विलोक्य विद्यालयपालि रम्यं
> शालां विशालामपि पुस्तकानाम्।
> गुरून् विलोक्यापि दयार्द्रचित्तान्
> विना त्वया का भविता दशा नौ॥ २८॥

**माधवी**– किं बहुना।

> तत्राऽस्पदानि चानंदप्रदानि यानि कानिचित्।
> तान्यनानंददान्येव भविष्यंति विना त्वया॥ २९॥

सावित्री—(सास्रं) सख्यौ !

भवति हि हृदये यथा व्यथा वां
मम विरहेण तथा ममापि चित्ते ।
भवति च भवतीवियोगजन्या
विरहभवापि दयार्द्रयोश्च पित्रोः ॥ २० ॥
तदहमपि न तद्व्यथानभिज्ञा
परमिह तत्स्मरणेन किं फलं नः ।
तदखिलमपि नैव चिंतनीयं
गुरुजनसेवनमेव चिंतनीयम् ॥ २१ ॥

(किंचित्स्मृतिमभिनीय ।) सख्यौ ! एषा पुस्तकशाला-तालकोद्घाटिनी शयनगृहस्य चैषा मे तालकोद्घाटिनी गृह्यतां। भवतीभ्यां पुस्तकशाला मे सद्गुरुभ्यः समर्पणीया विद्यालये तु प्रतिपक्षं सभा विधेया तस्यां च सदुपदेशभाषणावसरे स्मरणीयाहं ।

माधवी— हला सावित्रि ! किमेतदपि वक्तव्यं । मन्ये नैकः क्षणो लवो निमेषो वा प्रियसखीस्मरणशून्यो गमिष्यति नौ ।

सावित्री—अस्त्येव प्रत्ययस्तादृशो वां । मदीयशयनगृहे महानुभावस्यार्यपुत्रस्य चित्रफलकादधस्तादस्ति मंजूपात्रयं मे। तत्तालकोद्घाटिन्योपि तत्रैव संति ताभिरुद्घाटनीयास्ताः।

मालतीमाधव्यौ— (सास्रं स्वगतं ।) हा तत्र प्रवेश एव दुष्करः ।

**सावित्री**–तत्रैकस्यामिंद्रनीलमणिमया अन्यस्यां वज्रमणिमया अन्यतरस्यां च माणिक्यमयाः संत्यलंकारा मे। तिस्रोपि ताः श्रीसद्गुरुपत्न्या अग्रे निधाय प्रार्थनीया मद्वचसा सा यदासां मध्यादेकां यथारुचि स्वीकृत्य कृतकृत्यताभिमानवर्तीं मां विधेहीति। अथ गुरुपत्न्या स्वीकृतायामेकस्यां मंजूषायां द्वितीया भवतीभ्यां स्वीकार्या। तृतीयास्थास्तु सर्वेप्यलंकारा वार्षिकपरीक्षावसरे कन्याशालायां सर्वाभ्यः कन्याभ्यो यथाधिकारं क्रमशः श्रीसद्गुरुवर्यानुमत्या समर्पणीयाः।

**माधवी**– प्रियसखि!

> यथात्वदाज्ञं गुरुवर्यपत्न्यै
> समर्पयिष्यामि विभूषणानि।
> शालां विशालामपि पुस्तकानां
> दयार्द्रहृद्भ्योपि च सद्गुरुभ्यः॥ ३२॥
> तथा त्विलाभ्योपि कुमारिकाभ्यो
> विद्यालयस्थाभ्य उदारचित्ते।
> समर्पयिष्यामि विभूषणानि
> गुरोर्निदेशात्क्रमशो यथार्हं॥ ३३॥

परं द्वितीया मंजूषा भवतीभ्यां स्वीकार्येत्युक्तवत्यान भवत्या भवत्या नावां स्वकीयसखीगणगणनायां गणिते किंतु धनलवलुब्धे दास्यावेव गणिते स्वः।

सावित्री– नहि नहि नहि चैवं चिंतनीयं कदाचित्
प्रियसखि विपरीतः कस्त्वयायं वितर्कः।
प्रियजनपरितोषाभ्यार्पितं यत्तु वस्तु
स्वमिव भजति लोभी गण्यते तेन किं सः।३४।
श्रुतमस्माभिः किल मज्जन्मसमये तातचरणैर्मे आर्य-
शत्रुशल्याय आर्यवीरमित्राय च मनोहारिणो हीरकहा-
राः समर्पिता इति। आर्यशत्रुशल्यवीरमित्राभ्यां च स्व-
स्वसद्मनि पुत्रजन्मसमये तातचरणेभ्यो माणिक्यमालिकाः
समर्पिता इति। विचार्य चेतसा किं तत्तदग्रहणेन ते लो-
भिनो गणनीयाः। नेति निर्विवादं। किंच क्व तावत्सा
दुस्तरदुःखमयी वेला यस्यां पुनर्देशाटनं कुरुष्वेति मां प्र-
ति वक्तुं पुस्तकशालायां समागते युवां क्व चायमानंदमयः
समयस्तदद्यानंदेन यत्र ददामि युवाभ्यां तन्यूनं। न यदि
स्वीकरिष्यथो मद्दत्तं तर्हि मद्विभवेषु परस्वमसौ युवामि-
ति मन्येहं।
मालतीमाधव्यौ– एतादृगाग्रहग्रस्तायां प्रियसख्यां निरु-
पाये स्वः।
सावित्री– ( पृष्ठतोवलोक्य। ) कथमद्यापि नागताः पि-
तृचरणाः।
मालती– आर्यराजर्षिः महागच्छतीति शनैः शनैश्चलतो
विलंबः समभूत्परमिदानीमेव समागमिष्यंतीति मे तर्कः।
( ततः प्रविशंति सुमत्रेणाभ्यर्पितमुग्धाः सर्वेपि। )

अश्वपतिः– ( साश्चर्यं । ) वत्से ! अग्रत एवात्रागतासि किम् ।

सावित्री– आर्य ! मालतीमाधवीभ्यां सह प्रयाणोचितसंभाषणरसेनाविदितमार्गश्रमाग्रत एवात्रागतास्मि ।

अश्वपतिः– वत्से ! नैतयोस्त्वया विना क्षणमपि कुत्रापि रोचिष्यते ।

सावित्री– आर्य ! युष्मत्पादपद्मच्छायया संप्राप्तसर्वाभिलाषे एते । मन्मातरोपि मामिवैने पश्यंति तथापि मन्मनः ( इत्यर्द्धमुक्ताश्रूणि मुंचति । )

मालवी– वत्से ! यद्वक्तव्यं तद्यथेच्छं वद ।

सावित्री– मातः! यथायावधि युष्माभिर्ममैवैतयोरभिलाषाः पूरितास्तथैव तयोः पाणिग्रहणमहोत्सवोपि मन्निर्विशेषधिया विधेय इति वक्तुमिच्छति ।

मालवी– वत्से ! एतद्विषये निश्चितचित्ता भव ।

सावित्री– मातरस्मद्गुरूणां न मयाकश्चित्सत्कारः कृतोस्ति तन्मदीयताचरणान् विज्ञाप्य यथाहं गुरुवराणां तेषामनृणा भवेयं तथा विधेयं । अथवा ममैवायं प्रमादः कुतस्तेषामानृण्यमुपगच्छेयं । यतः–

> कृपया गुरुनिर्दिष्टैर्द्वित्रैरप्यक्षरैः किमु ।
> सुवर्णपूर्णापि समा सार्णवा साऽर्णवांवरा ॥३५॥

तथापि तथा विधेयं यथा गुरुवरचरणभक्तिभरवत्ताभिमानवती भवेयं ।

अश्वपतिः– मुंच चिंतामिमां वत्से त्वदीयान् सद्गुरूनहम् ।
करिष्याम्यल्पदिवसैर्भूचक्रशक्रसंपदः ॥ २६ ॥

सावित्री– अद्य संतुष्टं मे स्वांतं । मातर्मदीयालंकारविषयं मन्मतं पत्रिकेषा निवेदयिष्यति । (इत्युक्त्वा मालवीकरे पत्रिकामर्पयति ।)

मालवी– (हर्षाद्गृहीत्वा विलोक्य च ।) वत्से ! उत्तमोत्तमं ते मतं ।

अश्वपतिः– वत्से ! यथात्वदभिलाषं करिष्यामः । अपिस्विदस्ति किंचिदन्यद्वक्तव्यं ।

सावित्री– पूरितः सर्वोपि मनोरथो मे युष्माभिः ।

मालवी–देवि शैब्ये ! सावित्रीदानीं युष्मच्चरणयोरर्प्यते ।

शैब्या– सखि मालवि ! प्राणा हि सा मे बहिश्चराः ।

अश्वपतिः– आर्य राजर्षे! एषाश्रमसरित्तदितो निवर्तध्वं ।

मालवी– वत्स सत्यवन् ! वत्से सावित्रि ! आर्यराजर्षिणा देव्या शैब्यया च सह युवाभ्यामपि प्रतिनिवर्तनीयं ।

सत्यवान्– रथारूढेषु महाराजेषु युष्मासु च वयं सर्वेपि स्वाश्रमंप्रति यास्यामः ।

अश्वपतिः–न वयं राजर्षिप्रवरेष्वेतेषु पद्भ्यां प्रचलत्सु रथारूढा भविष्यामः ।

धीरमित्रः– युक्तं वचो देवस्य ।

द्युमत्सेनः–प्रिये ! तर्हि वयमित एव निवर्तामहे । अधिकागमनं हि नस्तेषां श्रमदं ।

**शैव्या**– अथ किं । तथा कुर्मः । वत्से सावित्रि! प्रणम मातरं पितरं च ।

**सावित्री**–यथाज्ञामातृचरणानां (इत्युक्त्वा मालव्यै प्रणमति।)

**मालवी**– (सास्रं ।) वत्से ! श्वश्रूश्वशुरसेवायामप्रमत्तया भाव्यं ।

**द्युमत्सेनः**– अयि शत्रुशल्यवीरमित्रौ ! वर्तमेनि महा राजसेवायामप्रमत्ताभ्यां भाव्यं युवाभ्यां ।

**प्रधानौ** – यथाज्ञार्यस्य । ( इति प्रणमतः । )

**सत्यवान्**– एषा मे चरमा प्रणामपंक्तिः ।

**अश्वपतिः**–वत्स ! चिरंजीव । मातापित्रोः परिचर्यायामप्रमत्तो भूयाः ।

**मालवी**– वत्स! भद्रमुद्रं भूयात्ते । प्रतिपक्षं पत्रद्वारा कुशलप्रवृत्तिरवश्यं प्रेषणीया ।

**सत्यवान्**– मातस्तथा करिष्यामि।

**अश्वपतिः**–आर्य राजर्षे ! देवि शैव्ये! प्रयाणप्रणामोयं मे ।

**शैव्याद्युमत्सेनौ**– अप्रतिहतविजयो भूयाः ।

**मालवी**–आर्य राजर्षे! आर्ये शैव्ये ! एषा मे प्रयाणप्रणाममाला ।

**शैव्याद्युमत्सेनौ**–देवि ! परमेश्वरप्रसादात्प्राप्तसत्पुत्रसुखा भूयाः ।

**द्युमत्सेनः शैव्या च**– ( सास्रं सावित्रीसत्यवद्भ्यां सह प्रतिनिवर्तेते । )

अश्वपतिः– प्रिये मालवि ! वत्से मालति! वत्से माधवि !
गतास्ते दूरं तदेते वयमपि गच्छाम।

मालतीमाधव्यौ– (विरहव्यथया सावित्र्यभिमुखे स्तब्धे निरुत्तरे तिष्ठतः।)

अश्वपतिः– (सास्रं सनिश्वासं) प्रिये!–

संयोगा विप्रयोगांता इति वाक्यं न वै मृषा।
पुनः समागमार्थं तत्प्रार्थनीयः परेश्वरः॥ ३७॥

कुतस्तादृशी भाग्यसंपन्नो ययाविरतं वत्सयोः सावित्रीसत्यवतोर्मुखचंद्रदर्शनाल्हादमनुभवाम।

मालवी– आर्यपुत्र! सत्यं वचो वः परं वत्सयोर्वियोगान्नाहं पदमपि चलितुं प्रभवामि। (पृष्ठतोवलोक्य साश्चर्यं) वत्सा सावित्री समायाति किम्।

अश्वपतिः– (विलोक्य।) अथ किं। वत्सैवायाति। किमर्थं पुनरागच्छति सेति न ज्ञायते।

मालवी– यथा तद्विरहेणास्मभ्यं न किंचिद्रोचते तथा तस्या अपीति मे तर्कः।

अश्वपतिः– न संभवत्येतद्वत्सायां।

सावित्री– आर्य! आश्रमंप्रति गच्छंत्याः स्मृतिमुपगतं मे।

मालवी– वत्से! किं तत्।

सावित्री– मातर्मुदितमदालक्ष्मी प्रसन्नपार्वती चेति कथाद्वयं प्राणनिर्विशेषं ममेति नाविदितं वस्तथापि तत्र पु-

स्तकालये मे तत्तत्र गत्वा त्वरया प्रेषणीयमिति।

अश्वपतिः– वत्से! तत्र गत्वा त्वरितमेव कथाद्वयं तत्प्रेषयिष्यामि।

सावित्री– कथं सर्वेपि यूयमद्याप्यत्रैव स्थिताः स्थः।

अश्वपतिः– वत्से! एषा ते माता एते च ते सख्यौ नेतश्चलतस्तेनात्रैव स्थिताः स्मः।

सावित्री– अयि मातः! अयि प्रियसख्यौ! किमेतदुचितं युष्माकं।

यदि जगति वियोगो नाभविष्यत्तदानीं
कथमियमभविष्यत्संगसौख्यानुभूतिः।
सति सति तु वियोगे तत्सदाभ्यर्थनीयः
पुनरपि सुहृदां सत्संगमायांविकेशाः॥ २८॥

स्थितास्मि मातरत्राहं रथमारुह्य निम्नगाम्।
उत्तीर्णायां त्वयीतोहं गमिष्यामि स्वमाश्रमम्॥२९॥

मालवी– वत्से! तथा कुर्मः। (इत्युक्त्वा सर्वेपि निष्क्रामंति।)

सावित्री– (स्वगतं।) मातापित्रोः स्वापत्येषु काप्यन्यादृश्येव विस्फुरति वत्सलता। निरुपमतमगांभीर्यभरपूरितांतःकरणा मातापि मे मद्विरहे यद्गलितधैर्या-समजनि सोयं निर्निमित्तस्य निष्प्रतिमस्य निःसीम्नो निसर्गसिद्धस्य च वात्सल्यस्यैव प्रभावः। ईदृगवर्णनीयवात्सल्यवतां

गुरुजनानां करोतु कल्याणपरंपराः परमेश्वरः। (निपुणं निर्वर्ण्य सनिःश्वासं।) गताः समुत्तीर्य सरितीरं सर्वेपि ते। न दृश्यते रथध्वजो न दृश्यते रथरजो न श्रूयते च किंकिणीगणनिक्वाणमिश्रोभिनवजलधरध्वानधीरो रथध्वनिरपि। हा पुनः कदापुण्यचरित्राणां तेषां दर्शनसुखमनुभविष्यामि।

(इति मूर्छां नाटयति।)
(ततः प्रविशति सत्यवान्।)

सत्यवान्– (स्वगतं।) मनोवचोगोचरो हि गुरुजनानां प्रेमातिरेकः। कतिपयलवविलंबितायामपि मे प्राणप्रियायामहितशतशंकाकुलस्वांताभ्यां ताभ्यां मातापितृभ्यां तदभिमुखं प्रेषितोस्मि। भवतितो बालरसालनिकुंजे विलोकयाम्येनां। (इति परिक्रमति।)

सावित्री–(संज्ञामुपलभ्य स्वगतं।) हा गुरुजनविरहविवशया मया विस्मृतमेतद्यन्मोचितया श्वश्रूश्वशुरौ चिंताकुलौ भविष्यत इति तत्त्वरिततरमाश्रमपदं गंतव्यं। किंचालमलंकारैरेभिर्यदमी तपोवनवासविरुद्धा गुरुजनसेवाविघ्नकारिणश्च तदेते मंजूषागर्भप्रदनयनार्हा एव। (इत्युत्तरालंकारानुत्तारयति।)

इंद्रनीलमणिमालिके नमो
रत्ननूपुरयुगारू मे नमः।

पद्मरागमणिकुंडले नम-
श्चंद्रकांतमणिकंकणे नमः ॥ ४० ॥
भूषितास्मि हि भवद्भिराजनु-
र्मामिका तनुरनुक्षणं, ननु ।
विस्मरिष्यति कदाप्ययं जनो
नोपकारमिह वस्तमुत्तमम् ॥ ४१ ॥
श्रीशैलराजतनयाहृदयाधिनाथ-
प्रेमावलोकलहरीभिरथाल्पकालात् ।
राजाधिराजपदभाजि हृदीश्वरे मे
संभूषयिष्यथ च मां पुनरेव यूयम् ॥ ४२ ॥

( इति पदं सलंकारानुत्तरीये निबध्नाति । )

नेपथ्ये– स्वस्त्यस्तु यंत्र तव मंत्रजपाऽस्तु भद्रं
तीर्थाटन प्रतिदिनं कुशलं तव स्यात् ।
माता पिता च परमं किल दैवतं मे
ताभ्यां परं किमपि तत्वमहं न जाने ॥ ४३ ॥

सावित्री– ( साश्चर्यं । ) पितृभक्तधुरंधर आर्यपुत्र एवा-
ऽऽगतः किं । ( इत्युक्त्वोत्तिष्ठति । )

सत्यवान्– ( प्रविश्य । ) प्रिये ! त्वदागमनविलंबेन चिं-
तातुरचित्ताभ्यां मातापितृभ्यां त्वदभिमुखं संप्रेषितोऽहं ।

सावित्री– आर्यपुत्र ! गुरुजनानां वात्सल्यं किमप्यचिं-
त्यमेव ।

सत्यवान्- प्रिये! तदेहि स्वमाश्रमं गच्छावः।
सावित्री- यथाज्ञाप्राणनाथस्य। (इति निष्क्रांतौ।)
(ततः प्रविशति द्युमत्सेनः शैब्या च।)
द्युमत्सेनः- देवि!
शैब्या- आज्ञापयत्वार्यपुत्रः।
द्युमत्सेनः-वत्सायाः सावित्र्याः सद्गुणान् विलोक्य विस्मयमेति मानसं मे। क्व तावन्महाराजकुले जन्म क्व वनवासव्यसनं क्व चात्मगुरुजनभक्तिरिति नाल्पविस्मयस्थानं।
शैब्या- आर्यपुत्र! बालभावसुलभालस्यापि निरालस्या तयास्माकमाहायनात्कीदृशी विधीयते सप्रेमातिशयं सपर्या।
द्युमत्सेनः- देवि! तत्राप्यपांगानां गुरूणामतिदुष्करैव सेवा। किंच स्वप्नेप्यदृष्टवातवर्षातपाया अपि तस्या वातवर्षातपसहिष्णुतानुभूतपूर्वेव दृश्यते यतस्ततोपि नौदास्यलेशमुपयाति।
शैब्या-आर्यपुत्र! ऋषिपत्न्योप्येवं वर्णयंति तद्गुणान्। कमलदलकोमलांग्यपि सावित्री यानि यानि कार्याणि करोति तानि त्वाजन्मवनवासकठोरगात्राभिरप्यस्माभिर्न पार्यते कर्तुमिति।
द्युमत्सेनः- प्रिये! नाद्यावधि प्रणष्टराज्यस्मरणमभून्मे परमिदानीं सावित्रीसद्गुणान् विलोक्य स्मर्यते गतसति राज्ये-

अलंकारसहस्राणि दिव्यांबरशतानि च ।
समर्पयित्वा वत्साया अभविष्यं कृतार्थधीः ॥ ४४ ॥

इति परं दैवयोगादिदानीमीदृशान्येवास्माकं भवंति दिनानि । ( इति निश्वासं मुंचति । )

शैव्या– प्राणनाथ ! तदेतत्सर्वमस्मन्मनस्येव न सावित्र्या मनसि ।

द्युमत्सेनः– कथमवगतमेतद्देव्या ।

शैव्या– विदितपूर्वमेवैतदार्यपुत्रस्य यद्वत्सया सावित्र्या व्यतीतज्येष्ठमासपूर्णिमातः प्रारब्धं वटसावित्रीव्रतमिति ।

द्युमत्सेनः– वेद्म्येतत्ततस्ततः ।

शैव्या– एकदा विहितपूर्णिमोपवासाप्यकृतपारणा सलिलानयनायाश्रमवासिनीभिर्मुनिपत्नीभिः सह तरंगिणीतीरमुपगता वत्सा ।

द्युमत्सेनः– नैतदुचितं कृतं वत्सया । ततस्ततः ।

शैव्या– सलिलपूर्णकलशद्वयभारात् ग्रीष्मातिभीष्मातपतापाच्च जाने निर्जलोपवासप्रभावाद्वा सा त्वकस्मान्मूर्च्छामुपगता ।

द्युमत्सेनः– (सोद्वेगं ।) हा धिग्धिगहमपि तत्र गंतुमिच्छामि । ( इत्युक्त्वोत्थातुमिच्छति । )

शैव्या– ( द्युमत्सेनहस्तमवलंब्य ) नाथ ! व्यतीतवृत्तांतवर्णनमेतत्तद्विश्रब्धमुपविश्यतां ।

**द्युमत्सेनः**– ( सनिःश्वासमुपविश्य। ) ततस्ततः।

**शैब्या**– निःसीमस्नेहार्द्रहृदयाभिर्मुनिपत्नीभिर्विहितैः शीतोपचारैः प्राप्ता संज्ञा वत्सया मे।

**द्युमत्सेनः**– न विस्मरिष्यामि मुनिपत्नीनामेतमुपकारं कदाचिदपि। ततस्ततः।

**शैब्या**– प्राप्तसंज्ञां च सावित्रीं विलोक्य साश्रुसलिललोचनाभिः प्रणयपरवशाभिर्मुनिपत्नीभिः सनिःश्वासमिदमुक्तं सर्वाभिः। हा धिग्दैवं हा धिक्कर्मपरिणामं हा धिग्दशाप्रावल्यं च। क तावन्मद्राधिपतेः पुत्रीत्वं क शाल्वाधिपतेः स्नुषात्वं क प्रबलबलशालिनः सत्यवतः प्राणप्रियात्वं क चैतादृशदुर्दशानुभवभाजनत्वं। सर्वथा नमोऽघटितघटनापटीयसे प्रारब्धपरिपाकायेति।

**द्युमत्सेनः**–अवितथैव तासामुक्तिस्ततस्ततः।

**शैब्या**– श्रुत्वैतानि वचांसि प्रियसख्यो युष्मत्तः किमपि याचितुमभिकांक्षते स्वांतं मेत्युक्तं सावित्र्या।

**द्युमत्सेनः**– ( स्वगतं। ) किमेताभ्यो याचिष्यति वत्सा। ( प्रकाशं ) ततस्ततः।

**शैब्या**– निःशंकमभियाचस्वेति प्रोक्ते ताभिः प्रोवाच पुत्री सावित्री। प्रियसख्यो मे। सशपथं सेश्वरसाक्षिकं च ब्रवीम्येतत्।

श्वश्रूश्वशुरसेवायां य आनंदोनुभूयते।
न स राज्ये न साम्राज्ये न स्वाराज्येपि दृश्यते॥४५॥

तद्तःपरं न कदाचिद्भवतीभिस्तादृशानि वचांसि वक्त-
व्यानीत्यभियाचेहं । यद्यपि श्वश्रूश्वशुरसेवासुखानुभव-
भाजनतया तृणलवतुलितस्वर्लोकसुखसंपदो मे तादृशव-
चःसहस्रश्रवणेनापि नानुतापगुपैप्यत्यंतःकरणमित्यशंकं
तथापि यदि मे गुरुजनानां श्रवणातिथितामुपगच्छेयुस्ता-
दृशानि वचांसि तर्हि ते कीदृशमनुतापमनुभवेयुरितिभव-
तीभिरेव चिंतनीयं ।

द्युमत्सेनः– ( सहर्षाश्रुलेशं । )

धन्या बाल्येपि वत्साया बुद्धिरेषा विजृंभते ।
यान्यासां मौढतास्थैर्ये स्थाविर्येपि च दुर्लभा ॥ ४६ ॥

ततस्ततः ।

शैब्या– श्रुत्वैतानि वत्साया वचांसि सलज्जं स्वीकृतं सर्वा-
भिर्नातःपरमेवं वदिष्याम इति । विचार्यतां तादृग्महा-
शयाया वत्साया मनसि पदभ्रष्टतावैमनस्यमुद्भवेत्किं ।

द्युमत्सेनः–यथार्थं वचः प्रियायाः । परमेतद्वृत्तांतजालमद्या-
वधि कथं न कथितं देव्या ।

शैब्या– नाथ ! मयाप्यद्य प्रातःसमय एव तद्गुणवर्णनप्र-
संगे मैत्रेयीमुखाच्छ्रुतमेतत् । श्रुत्वा च मन्ये सद्गुणपरमा-
णुभिरेव परेश्वरेण निर्मिता मे वत्सेति ।

द्युमत्सेनः– एवमेव देवि एवमेव । परं मन्ये धन्यानि
मुनिपत्नीनां श्रवणेंद्रियाणि यैः- श्रुतं वत्साया मुखात्

किमपि युष्मत्तो भियाचितुमाकांक्षते स्वांतं ममेति। अस्माकं श्रवणेंद्रियाणि कदा तदीप्सिततादृशवाक्यश्रवणानंदमनुभविष्यंति। अथवा श्रुत्वापि का नः शक्तिस्तदीप्सितगर्पयितुं। हा धिग्दारिद्र्यदशां। (इत्यश्रूणि मुंचति।)

(ततः प्रविशति सत्यवान् सावित्री च।)

सत्यवान्–प्रिये! कथमिदानीमीदृशदुराग्रहग्राहग्रस्तहृदयासि। नेदृशः कदाचित्त्वयि मया स्त्रीहठो दृष्टः। कुत उपशिक्षितमेतद्विवादवैदग्ध्यं।

सावित्री–(सांजलिबंधं।) प्राणनाथ! कामं भगवान् दुराग्रहग्राहग्रस्तां स्त्रीहठावेशशठाशयां विवादविदग्धां वा गणयतु मां परमद्य युष्माभिः सह वनमुपगंतव्यमिति महती मे समुत्कंठा सा चावश्यं कृपया सफला विधेयेति मेऽभ्यर्थना।

सत्यवान्– प्रिये! आहायनमेतत्तपोवननिवासानुभवेन निखिलवनसंचरणक्षममिवात्मानं मन्यसे परं नैतत्तपोवनं वनमिति मंतव्यं। आश्रमप्रभावादेतत्तु नगरनिर्विशेषतां बिभर्ति। मया तु प्रतिदिनं यद्वनमनुगम्यते तत्तु विकरालैर्व्यालैः क्रूरैः श्वापदैर्मत्तमतंगजैश्चातिभयंकरं दृश्यते।

सावित्री– नाथ त्वया नाथवती न बिभेमि कुतश्चन।
अपि संयमिनीनाथादन्येषां तु कथैव का॥२७॥

सत्यवान्– प्रिये! मास्तु भयशंका। परं यद्गाविनीव्रताचरणाक्लिष्टोपरागग्रस्तम्लानमानसा खरतरदिनकरकर-

निकरपरितप्ता च कां दशामनुभविष्यतीति भवत्यैव विचार्यं।

सावित्री– अलमुक्तिप्रत्युक्तिपरंपरया । स्वल्पैरेवाक्षरैः प्रार्थयामि।

यांति चेद्यांत्वमी प्राणाः पतत्वद्यैव वा वपुः ।
प्राणनाथ तथाप्यद्यागमिष्यामि त्वया सह ॥ ४८ ॥

सत्यवान्– यद्येवं तर्हि निरुपाया वयं परं तिरयति स्वातं- त्र्यं गुरुजनाज्ञापरतंत्रता न इति नाविदितं ते।

सावित्री– नाथ! गुरुजनाज्ञप्ता तु मां वनं नयिष्यसि न वा।

सत्यवान्– सत्यां गुरुजनाज्ञायां प्रियात्प्रियतरं हि नः।
अयि प्राणप्रिये तत्र प्रयाणं हि त्वया सह॥४९॥
(इत्युक्त्वाग्रतो गत्वा ससावित्र्या पर्णशालां प्रविश्य च।) अयि पितरौ! प्रणमाम्यहं सत्यवान्।

शैब्याद्युमत्सेनौ– वत्स! सदाभ्युदयमनुभूयाः।

सावित्री– पितरावभिवंदेहं सावित्री।

शैब्याद्युमत्सेनौ– वत्से! लभस्वाखिलाभिलाषपूर्तिं।

सावित्री– पितरौ! युष्मत्तः किमपि याचितुमभिकांक्षते स्वांतं मे। मन्ये च न दयार्द्रहृदयौ युवामिमां मेभ्यर्थनां विफलां करिष्यथ इति।

शैब्या– वत्से! यथेच्छमभियाचस्व।

**द्युमत्सेनः**– वत्से! यद्यप्यपांगोहं तथापि तपोवलमेव मे वत्साया अभिलषितं पूरयितुं प्रभवति तदविशंकमभियाचस्व। मन्ये च धन्यममुं वासरं यत्र वत्सास्मत्तोभियाचितुमभिकांक्षसे।

**सावित्री**– अयि! दयामयात्मानौ मातापितरौ! यदहमभियाचितुमिच्छामि तदर्पयितुं न भुजवलापेक्षा न तपोवलापेक्षा वा केवलं कृपावलोकलहरीवलापेक्षैव।

**द्युमत्सेनः**–यथाभिलाषमभियाचस्व। यदभियाचिष्यसि तदर्पयिष्यावः।

**शैब्या**– वत्से! प्रासमेवाभिलषितमवेहि।

**सावित्री**– अद्याहं दलमूलानि फलानि कमलान्यपि।
सहयास्याम्युपाहर्तुमित्ययं मे मनोरथः॥९०॥

**द्युमत्सेनः**– (स्वगतं।)
हृदय किमपि याचिष्यत्यलभ्यं हि वत्से-
त्यसमपरमहर्षांभोनिधौ मग्नमासीः।
परमिदमतिफल्गु प्रार्थितं हंत पुत्र्या
कुत इह कुदशायां तादृशानंदलाभः॥९१॥
(प्रकाशम्।) मालां विशालां गजमौक्तिकानां
मंजीरयुग्मं मणिभिर्निवद्धम्।
माणिक्यनद्धंगदकंकणे वा
याचस्व वत्से मणिमेखलां वा॥९२॥

किमेतद्वनाभिगमनमभियाचसे।

शैब्या— लोकपाललनाभिरलभ्या-
नप्यलंकृतिगणानिह दातुम्।
आर्यपुत्र तव एतदखंडं
शक्तिमज्जयति नंदिनि शुद्धम्॥ ५३॥

तत्तदुचितमेवाभ्यर्थनीयं तेभ्यः किं वनगमनाभ्यनुज्ञाभ्यर्थनयानया।

सावित्री— मातर्नमोस्तु गजमौक्तिकमालिकायै
स्वस्त्यस्तु सन्मणिमयाभरणावलीभ्यः।
मन्ये तृणाय सुरसंपदमप्यलभ्यां
सर्वस्वमस्ति मम वश्चरणाब्जसेवा॥ ५४॥

तन्मे वनगमनाभ्यनुज्ञैवाभिलषिताभ्यर्थनीया च नान्यत्।

शैब्या— वत्से! यद्यप्यनुभूतस्त्वयावनवासस्तथापि यद्वनमभिगच्छति सत्यवान् तदतिदुःसंचारं। तत्रापि निर्जलोपवासत्रयम्लानमानसा वत्सेति सत्यवत्सहगमनं ते नानुमोदामहे।

द्युमत्सेनः— वत्से! त्वमेव कथय।

असह्यातपसंतापा दुःसहोष्मसमीरणाः।
ग्रीष्मस्य वासरा एते त्वं चापि व्रतकर्षिता।५५।
भयंकरतरं क्रूरैः श्वापदैस्तद्वनं घनम्।
तव तत्राभिगमनमनुमोदामहे कथम्॥ ५६॥

**शैब्या**– यदि तादृश्येव ते वांछा तर्हि श्वः पारणां विधाय गंतव्यम्।

**सावित्री**– युष्माकमाशीर्निकरः साक्षाद्रक्षामणिर्हि नः।
पुण्यपुंजश्च युष्माकं सर्वापत्तिहरोस्ति नः॥८७॥
तदद्यैव वनाभिगमनाभ्यनुज्ञाप्रदानेन पूर्णाभिलाषां मां कुरुतमिति परमाभ्यर्थना।

**द्युमत्सेनः**– देवि! यदि वत्साया एष एव मनोरथस्तर्हि नावाभ्यां तस्मिन् विघ्न उत्पादनीयो यत्प्रथमैवेयमावां प्रति वत्साया अभ्यर्थना।

**शैब्या**– आर्यपुत्र! देवव्रतप्रज्ञावंतौ नात्र संनिहिताविति नाविदितं वः। वयं त्वपांगा अन्ये तपोवनमुनयोऽनपांगा अपि जराजीर्णतयाऽपांगकल्पा एव संति तद्यदि तयोरागमने विलंबो भविष्यति कं तर्हि तदभिमुखं प्रेषयिष्यामस्तथापि युष्मदिच्छा प्रमाणं।

**द्युमत्सेनः**–युक्तमाहात्र भवती भवती। परं वत्सां सावित्रीं प्रति वत्से! यदभियाचिष्यसि तदर्पयिष्याव इति प्रतिज्ञातमावाभ्यां तन्न तस्या अभ्यर्थना निष्फला विधेयेति मे मतं।

**शैब्या**– तर्हि देवः प्रमाणम्।

**द्युमत्सेनः**– वत्स सत्यवन्!

**सत्यवान्**– आज्ञापयतु तातः।

**द्युमत्सेनः**– अथ वत्सा सावित्री तपोवनविलोकनाय त्वया

सहाभिगंतुमिच्छति तत्सहचारेण सधनुषा निष्प्रमादेन त्वया वनमुपगंतव्यं।

सत्यवान्– यथाज्ञा तातपादानां। (इति प्रणमति।)

शैव्या– वत्स! प्रतिदिनं सायंसमये समागच्छसि परमद्य तु यामार्द्धशेषे वासरे समागंतव्यं।

सत्यवान्– यथाज्ञा मातुः। (इति प्रणमति।)

सावित्री– पितरौ! वनप्रयाणप्रणामोयं मे। (इति प्रणमति।)

शैव्याद्युमत्सेनौ– वत्स सत्यवन्! वत्से सावित्रि!

रक्षंतु देवताः सर्वे निर्विघ्नं चास्तु वां पथि।
इत्यपर्णाप्राणनाथं प्रार्थयामि प्रतिक्षणम्॥ ५८॥
आसूर्यास्तं यदि युवामत्र नैवागमिष्यथः।
गंतारस्तर्हि नौ प्राणा इति ज्ञेयमसंशयम्॥ ५९॥

सत्यवान्–

तातयामार्द्धशेषेऽहमागमिष्यामि वासरे।
न तद्विषयिणी चिंता चित्ते कार्या हि काचन॥ ६०॥

सावित्री– (स्वगतं सनिःश्वासं।) दैवकृत्यं दैवमेव वेत्ति। (प्रकाशं।) अवश्यं सूर्यास्तात्पूर्वमेवागमिष्यावः। (इत्युक्त्वा प्रणम्य निष्क्रांतौ।)

द्युमत्सेनः– वत्सो नितांतमुपयाति यथा वनांतं
यातस्तथैव कुशली सह वत्सया मे।

चित्तं तथापि परितापमुपैति तीव्रं
प्राणप्रिये न वत वेद्मि च तन्निदानम् ॥६१॥

शैब्या–प्राणनाथ ! ममाप्यद्य मनस्येवं भवत्यनुतापः । मा कश्चित्क्रूरः श्वापदोन्योवा परिभवतु वत्सां मे ।

द्युमत्सेनः– प्रिये ! वितथैवेयं शंका ते । यतः–

दोर्दंडवलमेवालं विपक्षलक्षघातये ।
वत्सस्यात्तायुधस्याग्रे श्वापदानां कथैव का ॥ ६२ ॥

परमावयोरंतःकरणमकारणं परितप्यत इति महच्चिंतास्थानं ।

शैब्या– नाथ !

आधीन् व्याधीनुपाधींश्च तापान् शापानपि क्षणात् ।
पापान्यपि निहंत्येव स्मरणं स्मरविद्विषः ॥ ६३ ॥

इति भवद्भिरेवानुदिनमुपदिश्यते तदीश्वरपूजनपर्णशालायां गत्वापर्णाप्राणप्रियस्मरणं कुर्वः ।

द्युमत्सेनः– युक्तैव देव्या उक्तिरिदानीमिदमेवोचितं नः ।
( इति निष्क्रांतौ । )

इति षष्ठोंकः ॥

---

मार्देश्वरात्मजनुपोद्धशशांकमौले-
र्दामस्य वर्यगुरुकेशवधर्मसूनोः ।
एषा कृति र्मम जटाशिवमित्रमौले-
र्गौरीगिरीशपदयोः कुसुमांजलिः स्यात् ॥ १ ॥

## ॥ अथ सप्तमोऽङ्कः ॥



( ततः प्रविशतः पृथगपृथगपर्यंकांकसुप्तौ निद्रामुद्रितलोचनौ मालव्यश्वपती । )

मालवी– ( त्रासात्समुत्थाय सक्रोधं । ) रेरे दुष्ट ! कस्त्वं जीवत्स्वस्मासु वत्सं सत्यवंतं पाशेन वध्वापहर्तुमिच्छसि । ( इति वदंती पर्यंकादवतीर्याश्वपतेरुपधानात्खड्गमाकर्षति । )

अश्वपतिः– (अकस्मात्प्रबुध्य साश्चर्यं । ) प्रिये प्रिये ! किमेतत् ।

मालवी–(नेत्रे समुन्मील्य परितोवलोक्य स्वगतं सनिःश्वासं) हा हंत स्वप्न एवायं किं । ( इत्युक्त्वा निष्कोशमसिं कोशशायिनं करोति । )

अश्वपतिः– प्राणप्रियेसि कुपिता स्वजनेन केना-

प्यसज्जनः किमथवास्ति तवापराधी ।
धारां किमर्थमत्रमुंचसि नेत्रवारां
निःश्वाससंततिमिमामपि दीर्घदीर्घाम् ॥ १ ॥

अयि जीवति वल्लभे त्वदीये
मयि वा जाग्रति दुःसहोग्रदंडे ।
अमरा अपि ते न तेपकर्तु

प्रभवाः कैव कथा तु किंकराणाम् ॥ २ ॥
तन्मन्ये केनापि दुःस्वप्नेन वंचितासीति ।

मालवी– ( चेलांचलेन लोचनेवमृज्य सगद्गदकंठं । ) यथा-वदसार्यपुत्रस्तथैव मे मंदभाग्याज्जातं ।

अश्वपतिः–प्रिये ! किं तद् ।

मालवी– नाथ ! व्यतिक्रांतेप्यर्द्धवयसि पुत्रमुखदर्शनसुखं तु नानुभूतं केवलं पुत्रिकैका समाप्ता । सापि ज्ञात्वैव बुद्धिपूर्वं वत्सरमात्रावशेषायुषे वत्साय सत्यवते स्वयंवरण-मालामर्पितवतीति किमल्पं चिंतास्थलं ।

अश्वपतिः– प्रिये ! तद्विषयविचारो भूतपूर्व एव । वत्सस्य सत्यवत आयुषोभिवृद्धये भगवता नारदेनोपदिष्टं च वत्सायै वटसावित्रीव्रतमिति नाविदितं ते तदेतन्न चिंता-विषयम् ।

मालवी–आर्यपुत्र! भूतार्थैव भवदुक्तिः । भगवतो नारदस्य वचनाधारेणैवाद्यावधि निश्चिताहमासं परमद्यतनेन दुःस्वप्नेनोन्मूलिता सा निश्चितता मे ।

अश्वपतिः– किमीदृशं स्वप्ने दृष्टं येनेदृशमुद्वेगमनुभवसि ।

मालवी– प्राणनाथ ! स्वप्नेहं निरंतरविकसिततरकुसुमभर-नम्रतरतरुवरनिकरमनोहराकारेकस्मिश्चित्कांतारे संच-रंतं प्रत्येकं तरुवराणां गुणान् दोषानुपयोगांश्च वत्सायै समुपदिशंतं वत्सं सत्यवंतं तद्वचनश्रवणेन चामंदमानंदमनु-भवंतीं वत्सां सावित्रीमपश्यम् ।

अश्वपतिः– देवि ! सर्वं त्वेतदानंदमदमेव दृष्टं ।

मालवी– प्राणनाथ ! दृष्ट्वात्वेतन्निरवधिरानंदनिधिः समुछ्लास मानसे मे परमनंतरमकस्माद्भव्यो दिव्यश्च कश्चित्पुरुषः समेत्य पाशेन वत्सं सत्यवंतं बलाद्गले बध्वा न मगणय्य वत्साया विलपितानि रुदितानि प्रणामपूर्वाः प्रार्थनाश्च दक्षिणां दिशं प्रति निनाय।वत्सा च तमनुरुदंती विलपंती तामेव दिशमनुससार। विलोक्यैतद्यावद्रोपावेशविवशातमेवदिव्यं पुरुषं हंतुमुद्योगमकरवं तावत्प्रबुद्धासीत्युद्वेगनिदानं मे।

अश्वपतिः– देवि ! संततं मनोमननारूपा एव स्वप्ना इति नाविदितं ते।

मालवी– आर्यपुत्र ! जानाम्यसंशयं स्वप्न एवायं तथापि वत्सस्य तत्कालीनापरिम्लाना मुखमुद्रा वत्साया अनाथतातिदीना विषादविपलीना कापि दुर्दशा दशा कारुण्यवर्षिणो विलापाश्च नाद्यापि मे हृदयादपसरंति तत्रापि स एवास्ति नारदप्रोक्तो वासरोपीत्यधिकं वेपते मे हृदयं।

अश्वपतिः– नात्र किंचिदुद्वेगकारणं। भवंति कदाचित्तादृशा अनंकिता अपि स्वप्नाः।

मालवी– प्राणनाथ ! यथास्तु तथास्तु परं मम मानसं तु वत्सयोः सावित्रीसत्यवतोर्मुखदर्शनमंतरा न शांतिमधिगमिष्यति।

अश्वपतिः– अहमपि देव्या आग्रहाद्विचारेणैनमुत्तमं मन्ये परमतीव दूरवर्ती स आश्रमस्तेन दिव्यहयचतुष्टयसंयुतोप्यस्मद्रथः श्वः सायंसमयानंतरं तं प्रदेशमुपयास्यतीति मे तर्कः।

मालवी– भवतु श्वः सायंसमयानंतरमपि वत्सयोर्मुखचंद्रदर्शनाल्हादमनुभवंती निश्चितचित्ता भविष्यामि।

अश्वपतिः– यद्येवं तर्हि प्रियं नः। (द्वाराभिमुखमवलोक्य।) कः कोस्ति भोः। (इत्याह्वयति।)

द्वारपालः– (प्रविश्य सांजलिबंधं) आज्ञापयतु देवः।

अश्वपतिः–भद्र! ब्रूहि नः सारथिं यद्दिव्यहयचतुष्टययुतं रथं सज्जं विधाय त्वरितमत्रानयेति।

द्वारपालः–यथाज्ञा देवस्य। (स्वगतं।) काचिदन्यैव महाराजीयस्य विनयस्य धन्यता येन मादृशं परिजनपरमाणुमपि भद्रेति वात्सल्यदर्शिन्या सादरया च वचनरचनयाभिमुखी करोति। अथवा नैतच्चित्रं निसर्गसिद्धविनयानां तेषां तत्परमक्षिप्तनिशीथसमये कुत्र जिगमिषति महाराज इति न ज्ञायते। (इति विचारयन्निष्क्रांतः।)

मालवी– नाथ! अकस्माद्वयं गच्छामः परं प्रधानावज्ञातास्मत्प्रयाणकारणौ व्यग्रौ भविष्यतस्तद्धेतौ प्रति किमपि संदेशितव्यं खलु।

अश्वपतिः– (सपरितोषं।) सम्यक् स्मारितं देव्या लिख्यतां पत्रिकैका।

मालवी– यथाज्ञा देवस्य। (इति लेखिनीं मशीरसपात्रं च गृहीत्वा) नाथ! किं लिखामि।

अश्वपतिः– प्रिये! लिख्यतां मदुक्त्यनुसारेण। अयि प्रियप्रधानौ मे! आकस्मिकदुःस्वप्नदर्शनोद्विग्नचित्ताया देव्याश्चेतःपरितोषाय गम्यतेऽस्माभिः संबंधिप्रवरस्य राजर्षेर्द्युमत्सेनस्याश्रमपदं तद्यावदस्मदागमनं निश्चिंतचित्ताभ्यां चिंतनीयानि राज्यकृत्यानि किंबहुनेति विरम्यते ज्येष्ठशुक्लचतुर्दश्यामश्वपतिना शुभाशिरर्पणपूर्वमिति।

मालवी– (त्वरितं लिखित्वाश्वपतेश्चरणयोरर्पयति।)

अश्वपतिः– (गृहीत्वा विलोक्य च सानंदं।) देवि! सम्यग्लिखितं। (इत्युक्त्वा पत्रिकां दत्तमुद्रां करोति।)

द्वारपालः– (प्रविश्य।) महाराज! सज्जो रथ इति विज्ञापयति सूतः।

अश्वपतिः– यद्येवं तर्हि सर्वाण्यायुधानि मे रथे स्थापय।

द्वारपालः– (तथा करोति।)

अश्वपतिः– देवि! देहि मे खड्गमेहि गच्छावः।

मालवी– यथाज्ञा देवस्य। (इत्युक्त्वा खड्गमर्पयित्वा स्वगतं।)

> सर्वमंगलमांगल्यवर्षिणौ विश्वहर्षिणौ।
> माधौ तौ दंपती वत्सौ दंपती मेऽभिरक्षताम् ॥ २ ॥

(इति वदंती राजानमनुगच्छति।)

अश्वपतिः– ( किंचित्स्मृतिमभिनीय । ) द्वारपाल ! प्रातर्मद्वचसा वक्तव्यौ शत्रुशल्यवीरमित्रौ यत्

आसंवत्सरविप्रयुक्ततनयावक्त्रेंदुसंदर्शना-
नंदायाथ तु मध्यरात्रसमये संप्रस्थिताः स्मो वयम् ।
यावन्मत्पुनरागमं प्रणयतः पाल्या प्रजास्मत्प्रिया
यत्तत्पालनमेव केवलमहो निःश्रेयसं नः परम् ॥ ४ ॥

इति । पत्रिका चैषार्पणीया । ( इति पत्रिकां तत्करेऽर्पयति । )

द्वारपालः– ( पत्रिकां गृहीत्वा सांजलिबंधं । ) अतःपरं को नियोगो देवस्य ।

अश्वपतिः– स्वाधिकारमशून्यं कुरु ।

द्वारपालः– यथाज्ञा देवस्य । ( इति निष्क्रांतः । )

अश्वपतिः– ( मालवीकरमवलंब्य रथमधिरुह्य । ) सारथिन् !

तुरगकलाचतुरस्त्वं चतुरश्च तुरंगमान् त्वरया ।
प्रेरय तथा यथा ते द्युमत्सेनाश्रमं तु गच्छेयुः ॥ ५ ॥

सारथीः– यथाज्ञा महाराजस्य । ( इति तुरगान् प्रेरयति । ( इति निष्क्रांताः । )

वत्सतरसमागमसमुत्कंठितानामुपहसितकामधेनूनां धेनूनां हुंकाराः सायंसमयसमकालमीलन्नलिनीदलपुटविलीनानामलिनां झंकाराश्च सर्वतः प्रसरति पवित्राहुतिगंधी सायंसमयहुताग्निहोत्रधूमः क्रमशो विकसतां रात्रिविकासिनां पुष्पाणां कैरवाणां चामोदशाली समीरः सांगनिगमपाठपटूनां मुनिवटूनां पवित्रो वेदध्वनिश्च तन्मन्ये सूर्योस्तमुपगतः क्षणादुपगमिष्यति वा तथापि तौ जीवितसर्वस्वं वत्सौ सावित्रीसत्यवंतौ कथं नागताविति चिंतातुरं मे चेतः ।

द्युमत्सेनः– देवि ! ममाप्येषैव चिंता पीडयति चित्तं परं क उपायो भाग्ययोगादेवव्रतमग्नावंतावपि न संनिहितौ स्तः ।

शैब्या– प्राणनाथ ! क्षणं प्रतिपालयावहे यदि कदाचिद्वनशोभाविलोकनलोभाच्छ्वापदभास्तपराभवात् केनाप्यन्येन वा कारणेन विलंबावलंबिनौ चेत्क्षणादागमिष्यतः ।

द्युमत्सेनः– प्रिये ! तद्गमनसमकालसमुत्पन्नेनानुतापेनैव किंचिदकुशलं सूचितमिति मन्येहं ।

शैब्या– प्राणनाथ ! बलवती हि भवितव्यता । इतरथा-जन्मत एवाग्रहानभिज्ञाया वत्सायाः क्वाद्य वनगमनाग्रहग्रस्तता क्व तदर्थमस्माकमग्रेभ्यर्थना क्व च तदभ्यर्थनानुरूपास्माकमनुमतिश्चेति सर्वमेतद्भवितव्यताविलसितमेव ।

द्युमत्सेनः– देवि ! एवमेतत् । परं तदभिमुखं गंतव्यमावाभ्यामिति मे मतं ।

शैब्या– प्राणनाथ ! तद्वनमार्गानभिज्ञाभ्यामंधाभ्यां चावाभ्यां कथं तदभिमुखं गंतुं शक्यम् ।

द्युमत्सेनः– देवि ! जानामि वत्सस्य सत्यवतो वचसास्मदाश्रमात्पूर्वस्यां दिशि तद्वनं वर्तत इति ।

शैब्या– यद्येवं तर्हि पूर्वां दिशमाश्रित्य तदभिमुखं गच्छावः ।

द्युमत्सेनः–तथा कुर्वः । ( इति निष्क्रांतौ । )

( ततः प्रविशंति तपोवनवासिनो मुनयः । )

भरद्वाजः– आर्य गौतम ! कथं राजर्षेर्द्युमत्सेनस्येयं पर्णशाला शून्येव दृश्यते ।

गौतमः– भरद्वाज ! ममाप्येतदाश्चर्यमिव प्रतिभाति । न कदाचिदेते सायंसमये शिवपूजां विहायान्यत्र गच्छंति ।

सुवर्चाः– भगवंतौ भरद्वाजगौतमौ ! वत्सौ सावित्रीसत्यवंतौ तु कदाचित्कुत्रचित्कार्यप्रसंगाद्गताविति युज्यतेनुमानम् परं वृद्धयोरंधयोश्च न संभवत्यस्मिन् समये क्वापि गमनं देवीमहाराजयोः ।

दाल्भ्यः– आर्य ! प्रहरावशेषे वासरे तु मया पर्णशालांगणस्थौ दृष्टौ शैब्याद्युमत्सेनौ ततःपरं कुत्र गतौ ताविति न जानेहं ।

आपस्तंबः– तपोधना ! वत्सः सत्यवानद्य प्रातःसमयादेव नावलोकितः ।

धौम्यः– मुनयो ! मद्देवार्चनास्थानं ये दिनाप्यस्मत्संप्रति-

मंतरा न गच्छंति ते रात्रावप्यकस्माद्गता नाद्यापि प्रतिनिवृत्ताश्चेति ।

मुनिपत्न्यः– वत्सा सावित्री तु प्रतिदिनमस्माभिः सह पुष्पाण्युच्चिनोति बालवृक्षानभिषिंचति सलिलान्याहरति च परमद्य नास्माभिः प्रातःसमयादेव विलोकिता ।

भरद्वाजः– तर्हि सर्वैरप्यस्माभिस्तदन्वेषणाय गंतव्यम् ।

गौतमः– क्षणं प्रतिपालयामहे यदि कदाचिदाश्रमेश्वरदर्शनाय गताश्चेदागमिष्यंति ।

मुनयः– एवमेतत् ।

आशिर्भिर्युवयोरार्यौ प्रसादाच्च परेशितुः ।
महाराजं च देवीं च द्रक्ष्यामोऽत्राचिराद्वयम् ॥ ६ ॥

( ततः प्रविशति मालव्या सहितोऽश्वपतिः । )

मालवी– आश्चर्यमाश्चर्यमिमा मुनीनां

शून्याः कथं संप्रति पर्णशालाः ।
वेदध्वनिर्वा शिवकीर्तनं वा
नोपैति कर्णातिथितां कथं नः ॥ ७ ॥

बद्धमौनगृहसारिकाशुकं
शून्यचित्तहरिणीगणांगणम् ।
तद्वनं न वनमेतदित्यहो
शंकते हृदयनाथ मे मनः ॥ ८॥

अश्वपतिः– असंशयं तद्वनमेतदेव

प्राणप्रिये मुंच मृषाभिशंकाम् ।
निशाप्रभावात् परिसुप्तसत्वं
ध्रुवं तदप्यन्यदिवावभाति ॥ ९ ॥

तदेहि कदलीवनवीथ्यानया राजर्षेरेव पर्णशालां गच्छावः ।
( इत्युक्त्वाग्रतश्चलतः । )

**मुनयः**– ( सहर्ष । ) कयोरप्यालापः श्रूयते । ( इति परितो विलोकयंति । )

**गौतमः**– महाराजस्याश्वपतेरेवायं गंभीरो ध्वनिः ।

**भरद्वाजः**– कुतोऽकस्मात्तस्यात्र रात्रावभिगमनं ।

**अश्वपतिः**– (प्रविश्य ।) अयि वंद्यास्तपोधना ! अभिवंदेहमश्वपतिः ।

**सर्वेपि मुनयः**– ( सहर्षमुत्थाय । )

जय जय जय जीव जीव राज-
श्चिह सह मित्रकलत्रपुत्रयानैः ।

**मालवी**– अर्याः ! अभिवंदेहं मालवी ।

**मुनयः**– त्वमपि च नरपालधर्मजाये-
नुभव नितांतमभंगमंगलानि ॥ १० ॥

**मुनिपत्न्यः**– ( सहर्षमुत्थाय । ) एहि देवि ! परिष्वजस्व नः ।
( इत्युक्त्वा मिथस्तथा कुर्वंति । )

**मुनयः**– मूर्तौ शैब्यात्द्युमत्सेनावपराविव वीक्ष्य वाम् ।
परमं परितोषं नः प्राप्तमद्य तु मानसम् ॥ ११ ॥

अश्वपतिः- ( स्वगतं। )

राजर्षिः क्वास्ति देवी वा क्व वत्साविति मे मनः।
ज्ञातुमुत्कंठतेऽथापि प्रष्टुं हंत बिभेति हा ॥ १२ ॥

( प्रकाशम्। ) मुनयो ! ममापि युष्मद्दर्शनात्तादृशमानंदमनुभवति स्वांतं।

मुनयः- राजन् स राजर्षिवरो देवी वा प्रणयालया।

अश्वपतिः- ( स्वगतं। ) हृदय ! धीरं भव।

मालवी- ( स्वगतं सभयं। ) हा किमतःपरं श्रोष्यामि।

मुनयः-सावित्रीसत्यवंतौ वा वत्सौ क्वापि विलोकितौ ॥१३॥

मालवी- हा श्रुतमेतद्दुःश्रवं। परिसमाप्तमिदानीं जीवितप्रयोजनं मे।

अनिमित्तमनोतितापतो-
प्यतिदुःस्वप्नपरंपरेक्षणात्।
यदशंकि भयं तदेव हा
प्रतिपन्नं मम मंदभाग्यतः॥१४॥ ( इति मूर्छां नाटयति। )

अश्वपतिः- देवि ! समाश्वसिहि समाश्वसिहि।

मुनिपत्न्यः-प्रियसखि मालवि ! समाश्वसिहि। ( इति वदंत्यः पटांचलेन वीजयंति। )

मालवी- (संज्ञामुपलभ्य। )

सह राजर्षिवर्येण देव्या च सह शैब्यया।
सावित्रीसत्यवंतौ द्वे हा हंताद्य क्व निर्गतौ ॥ १५ ॥

अश्वपतिः–प्रिये किमर्थं परितप्यते मृषा
किमत्र दृष्टं परितापकारणम् ।
विधाय धैर्यं प्रथमं तदेनयोः
प्रवृत्तिमेभ्यः शृणुवो यथातथम् ॥ १६ ॥

मालवी– आर्यपुत्र ! किं करोमि दुःस्वप्नदर्शनादुद्विग्नं मे मानसमकुशलमाशंकते ।

अश्वपतिः– आर्यास्तपस्विनः ! किं महाभागो राजर्षिर्देवी शैव्या वत्सौ सावित्रीसत्यवंतौ चात्र न संति येन मत्प्रष्टव्यं भवंत एव मां पृच्छंति । न संति चेत्क्व ते प्रयाता इति किंचिज्जानंतेऽत्र भवंतो भवंतः ।

मुनयः– ( सनिःश्वासं । )

अप्येकाश्रमवासाअप्यन्योन्यविरहासहाः ।
अप्यन्योन्याशयाभिज्ञा हाद्य तैर्वंचिता वयम् ॥ १७ ॥

( इत्यश्रूणि मुंचंति । )

अश्वपतिः–

मा मा चिंतां कुरुत मुनयो युष्मदाशिःप्रभावात्
सर्वेषां नः संपदि भविता श्रेय एवाविशंकम् ।
लप्स्यामस्तानपि कुशलिनश्चंद्रचूडप्रसादात्
गंतव्यं तत्प्रतिगिरिवनं तत्समन्वेषणार्थम् ॥ १८ ॥
अन्विष्यान्विष्य सर्वत्र सर्वैर्यामद्वयात्परम् ।
अत्रागंतव्यमस्माभिः पुनरित्थं मतिर्मम ॥ १९ ॥

भरद्वाजः–राजन् ! यद्येवं तर्हि सशिष्योहं प्राचेतसीं दिशं गच्छामि । ( इति निष्क्रांतः । )

गौतमः– वत्स अश्वपते ! सशिष्योहं कौबेरीमाशामुपगच्छामि । ( इति निष्क्रांतः । )

सुवर्चाः– महीमहेंद्र माहेंद्रीमाशामासाद्य सत्वरम् ।
पुनर्यामद्वयात्पूर्वं प्राप्तं मामत्र विद्धि भोः ॥ २० ॥
( इति निष्क्रांतः । )

अश्वपतिः– देवि ! ऐहि वयं दक्षिणस्यां तानन्वेपयिष्यामः ।( इति निष्क्रांतः । ) ( ततः प्रविशत इतस्तः परिभ्रमणश्रमश्रांतौ शैब्याद्युमत्सेनौ । )

शैब्या–प्राणनाथ! अयं ह्येतद्भावनं नः।प्रतिपदमितस्ततःपतनैः स्खलनैश्च छिन्नभिन्नांगतया द्रवद्रुधिरधारार्द्रदेहयोरावयोरनेककंटकविद्धाविमौ चरणौ पदात्पदमपि चलितुं न शक्तौ न च पुनराश्रमोपि प्राप्तुं शक्य आवाभ्यां । किंच यथाऽवां वत्सौ मृगयितुमितस्ततः परिभ्रमावस्तथा वत्सावप्याश्रममुपागतावास्मान् मृगयितुं प्रतिपदपं भ्रमिष्यत एव। रात्रिरेषा सर्वेषां न उद्वेगमय्येव गमिष्यति तत्क्षणमत्र विश्रम्यतामित्यभ्यर्थयामि।

द्युमत्सेनः– एवं कुर्वः। (इत्युक्त्वोपविशति । क्षणं विश्रम्य) देवि !

शैब्या– आज्ञापयत्वार्यपुत्रः ।

द्युमत्सेनः– आश्चर्यमेतत्।

शैव्या– किं तत्।
द्युमत्सेनः– यद्बहुवर्षप्राप्तमांध्यमद्यापसरेदिति।
शैव्या– प्राणनाथ! किमकुंठप्रसरा देवस्य दृष्टिः।
द्युमत्सेनः– अथ किम्। अयं चंद्र इमास्तारा इमानि नक्षत्राणि च मे लोचनगोचराणि भवंति। विचित्रमेतद्वनं च पश्यामि। सद्यः शुक्तिपुटोन्मुक्तमुक्ताफलपटलसमुज्वलस्तारकानिकरानुकारी हीरकहारमनोहारी चायमवतरति नयनयोः पदवीमविरतपतनोत्पतनो गिरिसरित्प्रवाहोपि।
शैव्या–प्राणनाथ! सर्वमेतन्ममापि दृग्गोचरं भवति परं कुतोस्यां दुर्दशायां तादृशसुखानुभवपात्रता नः। यतः–

प्राणसर्वस्वमस्माकं यया वत्सौ हृतौ बलात्।
सा प्रणष्टां पुनर्दृष्टिमर्पयेद्दुर्दशा कथम् ॥ २१ ॥

मन्ये केवलमावयोर्वत्सान्वेषणपरयोर्वनतरुतरंगिणीप्रस्रवणेंदुनक्षत्रग्रहाद्याकारवृत्तितया तत्तदखिलं साक्षाद्दृश्यमानमिव प्रतिभातीति।
द्युमत्सेनः– नैतदेवं।

पश्य देवि नदीतीरे कोयं वृक्षो विराजते।

शैव्या– ( निपुणं निरीक्ष्य। )

नाथ प्रफुल्लफुल्लालिसंकुलो बकुलः खलु ॥ २२ ॥

द्युमत्सेनः– एवमेतत्। प्रिये! तस्य परिभ्रमद्भ्रमरभरभज्यमानेव विकसितकुसुमशालिनी कस्यां दिशि विनम्रा शाखा।

शैव्या– आर्यपुत्र ! दक्षिणस्याम् ।

द्युमत्सेनः– देवि ! एवमेव एवमेव ।

> यद्यद्यथा वदसि देवि तथा तथैतत्
> सर्वं ममापि नयनातिथितां प्रयाति ।
> तस्मादसंशयमुमारमणेन दृष्टि-
> र्मन्येऽर्पितेति करुणामृतनीरदेन ॥ २३ ॥

शैव्या– ( निःश्वस्य । )

> प्राणनाथ विना वत्सौ नेत्रानंदप्रदायिनौ ।
> प्राप्ताभ्यामपि नेत्राभ्यामाभ्यां हा हंत किं फलम् ॥२४॥
> दर्शनीयतमं रत्नद्वयं विगलितं करात्
> दृष्ट्यानया निष्फलया नाथ किं नः प्रयोजनम् ॥२५॥

द्युमत्सेनः– देवि ! यद्यप्यवितथमेव वचस्ते तथापि वत्सयोरन्वेषणे तु न तस्या अल्प उपयोगः । यतः–

> दृष्ट्या यया प्रतिगिरिं प्रतिगह्वरं च
> प्रत्याश्रमं प्रतिवनं प्रतिपादपं च ।
> वत्सौ हि तौ मृगयितुं प्रभवाव आवा-
> मेनां कथं कथय रे विफलां वदावः ॥२६ ॥

किंच

> येन प्रणष्टा सा दृष्टिर्दयादृष्ट्या समर्पिता ।
> स एव प्राणसर्वस्वमर्पयिष्यति तौ हि नौ ॥ २७ ॥

शैव्या– संतु सत्यान्यार्यपुत्रस्य वचांसि। ( इत्युक्त्वोत्तिष्ठति। )

द्युमत्सेनः– ( उत्थाय ) प्रिये! एहि।

प्रतिवनं प्रतिभूधरकंदरं
प्रतितपोविपिनाश्रमभूमिकम्।
प्रतिनिकुंजमलं मृगयावहे
विनयवारिनिधी ननु तावुभौ॥ २८॥

( इत्युक्त्वा सर्वतः परिभ्रमतः। )

शैव्या– ( सास्रं। )

हेसावित्रि प्रणयनिलये हंत कुत्रासि वत्से

द्युमत्सेनः– ( सखेदं। )

शौर्याभोधे गुणिगणगुरो सत्यवन् क्वासि वत्स।

उभौ– ( बाष्पकंठं। )

वत्से वत्से कथमुपगताद्यापि नास्मत्समीपे।
हाहा वत्स त्वमपि च कथं विस्मृतः स्वां प्रतिज्ञाम्॥२९॥

( इत्युच्चैर्विलपंतौ मूर्च्छां नाटयतः। )

द्युमत्सेनः– ( क्षणाल्लब्धसंज्ञ उत्थाय। ) देवि!

पश्यन्नपि न पश्यामि क्व वदामि क्व यामि वा।
किं करोमीति नो वेद्मि दुःखाद्दिङ्मूढतां गतः॥ ३०॥

शैव्या– आर्यपुत्र! आश्रमान्निर्गतयोरावयोर्यामद्वयं व्यतीतं।

सप्राणौ यदिचेद्वत्सौ नैतावत्कालमाश्रमम्।
नागत्य क्वापि विश्रामं लभेतामिति मे मतिः॥ ३१॥

तद्तः परमावाभ्यामस्मदाश्रम एव गंतव्यः ।
द्युमत्सेनः– देवि !

आगत्याप्याश्रमं तस्मिन्न विलोक्य च नौ पुनः ।
अस्मदन्वेषणायैतौ वनाद्वनमटिष्यतः ॥ २२ ॥

इति मे प्रतिभाति । तत्तत्र गत्वापि नतन्मुखदर्शनसुखमनुभविष्यावः । किंचास्मदाश्रमदिगपि न मयादिङ्मूढतया ण ज्ञायते ।
शैब्या– नाथ ! न केवलं वत्सावेवास्मानन्विष्यतः किंत्वाश्रमवासिनः सर्वेपि वनाद्वनं नौ मृगयिष्यंति । तन्मध्यात्कश्चिदत्राप्यागमिष्यति तद्धैर्यमालंब्य विश्रम्यताम् ।
द्युमत्सेनः– देवि ! एवं कुर्वः । ( इत्युपविशतः । )
प्रविश्य सुवर्चाः– ( स्वगतं । ) महाराजं द्युमत्सेनं देवीं शैव्यां वत्सौ सावित्रीसत्यवंतौ च प्रतिवनं प्रतिलतागृहं प्रतिपादपतलं चान्विष्यान्विष्य परिश्रांतोहं । समासन्नश्चायं निशीथस्तत्पुनः स आश्रम एव मया त्वरया गंतव्यः । ( इति परिधावति । तत्पादपातशब्दमुपश्रुत्य सत्यवदागमनशुद्धया । )
शैव्याद्युमत्सेनौ– वत्स सत्यवन् सत्यवन् ! समागतः किं । इत्युक्त्वंतौ तं प्रतिधावतः । )
सुवर्चाः– आर्यराजर्षे ! विजयस्व विजयस्व । नाहं सत्यवान् किंतु सुवर्चाः ।

द्युमत्सेनः–अयि मुनिराज! कुतोत्रागमनं वः। किंस्विद्विलोकितौ कापि वत्सौ सावित्रीसत्यवंतौ।

सुवर्चाः–राजर्षे! सायंसमयेद्य भवतां शिवार्चनपर्णशालायां परमेश्वरस्तुतिपाठादिश्रेयस्करशब्दपरंपरा न श्रुतास्माभिस्ततो भगवान् भरद्वाज आर्यो गौतमो दयालुर्दाल्भ्य आप्त आपस्तंबोतिसौम्यो धौम्योहं च सशंकं तस्यां प्रविष्टाः। विलोक्य च शून्यां तामस्मन्मनांस्यपि शून्यतामभजन्।

द्युमत्सेनः–(स्वगतं।) अहो महात्मनां महत्ता। (प्रकाशं।) ततस्ततः।

सुवर्चाः–तत उद्विग्नानामस्माकं मनांसि नानाविधवितर्कदोलाखेलनलोलान्यभवन् यावच्चार्यदेव्या मालव्या सहितो महाराजोश्वपतिरप्यस्मदाश्रमभूमिकां भूषयामास।

द्युमत्सेनः–किंस्विन्महाराजोश्वपतिरप्यागतः। हा कथं तस्मै मुखं दर्शयिष्यामि।

शैब्या–प्राणनाथ! मामपि सैव त्रपा पीडयति परं का प्रतिक्रिया।

सुवर्चाः–विधाय समयोचितां सत्क्रियां महाराज! विलोकितः किं कापि सपरिवारो राजर्षिद्युमत्सेन इत्यस्माभिः पृष्टश्वाश्वपतिरार्या युष्मत्त एवैतदहमवगंतुमिच्छामीति प्रावोचत्।

द्युमत्सेनः–ततस्ततः।

सुवर्चाः– श्रुत्वैतदधिकतमोद्विग्नचित्तैरस्माभिर्महाराज अतिनिकटसहवासवर्तोपि वयमद्य दैवात्तद्वृत्तानभिज्ञाः स्मो नैतदल्पंव्रीडाक्रीडास्थलमिति साश्रुपातमुक्तं।

द्युमत्सेनः– तत्रास्माकमविमृश्यकारितैवोपालंभमर्हति नान्यस्ततस्ततः।

सुवर्चाः– ततश्चास्माकं सानुतापां वाचमुपश्रुत्य तपस्विनो निश्चिता भवत सर्वेपि वयं संमील्य क्षणमात्राद्देवतान् मृगयिष्यामह इति सादरमुवाच महाराजः।

द्युमत्सेनः– हा मदर्थं सर्वेषामीदृशः परिश्रमो भविष्यति। ततस्ततः।

सुवर्चाः– ततः सशिष्येण भरद्वाजेन पश्चिमदिग्गमनमंगीकृतं गौतमेनोत्तरादिक्प्रयाणं स्वीकृतं महाराजेनाश्वपतिना दक्षिणदिक्प्रयाणमूरीकृतं मया च पूर्वदिगन्वेषणमुररीकृतं। सर्वैश्च निशीथसमये पुनरयमाश्रम उपगंतव्य इति निश्चयश्चाकारि।

द्युमत्सेनः– भगवन्! कस्तादृशं श्रमं स्वीकुर्याद्विना युष्मान्।

सुवर्चाः– इदानीं समासन्ननिशीथत्वात् प्रत्यावृत्त्याश्रमं गच्छतो मेत्र युष्माकं समागमो जातः परं यूयमपि सावित्रीसत्यवद्वियुक्ता इत्यधुनैव ज्ञायते।

द्युमत्सेनः– भगवन्! प्रातःसमय एव तौ तु वनमुपगतौ। समासन्नेपि सायंसमये यदा न वनात्तौ विनिवृत्तौ तदोद्वेगवेगविवशस्तितयानापृच्छ्याश्रमवासिनोप्येकपदएवावां

तदभिमुखं गंतुं प्रस्थितौ।

सुवर्चाः— राजर्षे! तादृश एव प्रियजनविरहस्ततस्ततः।

द्युमत्सेनः— ततः सर्वतो विश्रांतपरिभ्रमणश्रमेणातिखिन्नौ प्रतिपदं स्खलनैः पतनैश्च छिन्नभिन्नांगौ निःसंख्यकंटकविद्धचरणतलौ च कस्मिंश्चित्तरंगिणीतीरे क्षणमुपविष्टावावां।

सुवर्चाः—राजर्षे! अतिदुष्करं हि कृतमेतद्यदंबाभ्यामपि युवाभ्यां वत्सयोरन्वेषणाय परितो धावितं। ततस्ततः।

द्युमत्सेनः— ततश्चाकस्मान्नजाने केन हेतुना बहुकालात्प्रणष्टे नेत्ररत्ने मया देव्या च पुनरुपलब्धे।

सुवर्चाः— (साश्चर्यानंदं।) इदममंदानंदास्पदं यत्प्रणष्टयोर्नेत्ररत्नयोः पुनरुपलब्धिरिति।

द्युमत्सेनः— (निःश्वस्य।) निष्फलैव मानवरत्नयोर्वत्सयोरलाभे नेत्ररत्नोपलब्धिः। (इति वदन्नश्रूणि मुंचति।)

सुवर्चाः— येन दयालुना परमेश्वरेण प्रणष्टान्यपि नेत्ररत्नान्यर्पितानि स एव तदपि रत्नद्वयमर्पयिष्यति। तदतः परमस्माभिः स्वाश्रम एव गंतव्यस्तत्रावश्यं सर्वेषां समागमो भविष्यति।

शैब्या— मुनिराज! विना वत्सौ महाराजायाश्वपतये देव्यै मालव्यै च लज्जयामुखमपि दर्शयितुं न प्रभवामि तत्तदागमनांतरा नाहमाश्रममागमिष्यामि।

सुवर्चाः— मातः शैब्ये! किमेतदुच्यते। किं वत्से सत्यर्ति

वत्सायां सावित्र्यां च युवां न्यूनवात्सल्यौ तौ चाधिकवात्सल्यौ स्त इति मन्यसे।

द्युमत्सेनः– देवि! नेदृशमेतयोर्दंपत्योरंतःकरणं। किंच तेषां समागमेन किंचित्कृत्यं स्फुरिष्यति। यतः–

नानादुःखशतांधानां कर्तव्यं मूढचेतसाम्।
अकुंठप्रसरं चक्षुः प्रिये प्रियसमागमः॥ २३॥

शैब्या–यद्येवं तर्हि प्राणनाथाज्ञा प्रमाणं मे।

द्युमत्सेनः– सांप्रतं त्वस्मदाश्रममार्गेप्यनभिज्ञोस्मि।

सुवर्चाः– राजर्षे! युष्मदन्वेषणाय प्रतिदिशं प्रचलितेष्वस्मासु प्रोवाचाश्वपतिः।

द्युमत्सेनः– किमिति।

सुवर्चाः– अयि तपोधनाः! रात्रौ भ्रमन् कश्चित्कदाचिद्दिङ्मूढोपि भवति तदत्र स्थितैर्युष्माभिर्गिरिशिखरमेतदारुह्य ज्वलनज्वाला प्रकाशनीया यदाधारेणांधतमतमोविलीनमप्याश्रमपदमेतदभिज्ञास्यंति सर्वेपीति।

द्युमत्सेनः– अनागतमपि पश्यति प्रज्ञावतां प्रज्ञा।

शैब्या– मुनिराज! तर्हि दूरे हि येयं ज्वलति ज्वाला तत्रैवास्माकमाश्रमः किम्।

सुवर्चाः– अथ किं। तदेत गच्छाम। (इति निष्क्रांताः।)

(ततः प्रविशति धौम्यः।)

धौम्यः– (परिक्रम्यावलोक्य च।)

नीचोन्नतेष्वपि पदेषु समप्रसादः
प्राप्तः श्रियं निरुपमां परमोन्नतिं च ।
मध्यस्थतामभिवहंश्च सुधाकरोयं
कं कं न सज्जन इवाप्तसुखं करोति ॥ ३४ ॥

समासन्नोहि निशीथः कथमद्यापि न कश्चिदागतः ।

अश्वपतिः– (प्रविश्य।) असीमसौम्यत्वसिंधो भगवन् धौम्य। प्रणामांजलिरयं मे ।

धौम्यः– विजयस्व राजन् विजयस्व ।

मालवी– भगवन्नभिवंदेहं ।

धौम्यः– देवि ! संप्राप्तसर्वाभिलाषा भूयाः ।

अश्वपतिः– भगवन् ! कः कः समागतः ।

धौम्यः– नाद्यापि कश्चिदागतोस्ति विना युष्मान् ।

अश्वपतिः– क्षणादागमिष्यंति सर्वेपि । समासन्ना प्रत्यागमनवेला ।

मालवी– प्राणनाथ ! संवत्सरात्पूर्वमयमेव माधवीमंडपः कीदृशानंदवर्षी बभूव परमद्य दैवात् (इत्यर्द्धमुक्त्वाश्रूणि मुंचति ।)

अश्वपतिः– प्रिये ! समाश्वसिहि समाश्वसिहि । क्षणादनंतरं पुनरयमेव माधवीमंडपस्तादृशं ततोप्यधिकं वानंदं वितरिष्यति नः । किंच विपदि धैर्यस्थैर्यमेव कृत्यं कृत्यविदां इति नाविदितं देव्याः ।

**प्रविश्य भरद्वाजगौतमौ**– जयतु जयतु महाराजो देवी च।

**अश्वपतिः**–(मालव्या सहोत्थाय) भगवंतावभिवंदेहं। (इति प्रणमति।)

**भरद्वाजगौतमौ**– राजन्! किंसिदुपलब्धा कापि तेषां प्रवृत्ति।

**अश्वपतिः**– भगवंतौ! विलोकितानि मया दक्षिणदिगंतर्गतान्यरण्यानि परं न पुण्यचरित्राणां तेषां कापि प्रवृत्तिरुपलब्धा।

**भरजद्वाजगौतमौ**– महाराज! यूयमिवावामपि निष्फलतमपरिभ्रमणपरिश्रमवंतौ स्वः।

**मालवी**– तदेतद्दुर्दशाविलसितं।

**धौम्यः**– देवि! यावन्नागतः सुवर्चास्तावदायुष्मती मत्याशा नः।

**मालवी**– सत्यमेतत् परं दुःस्वप्नेन मे निवेदितपूर्वैव दुष्परिणतिः। (इति निःश्वासं मुंचति।)

**अश्वपतिः**– देवि! निपुणतमापि किमेवं वदसि।

अपर्णाप्राणनाथस्य कृपापूर्णेक्षणात् क्षणात्।
राजर्षिमार्यं देवीं च वत्सावपि च द्रक्ष्यसि॥ २९॥

(ततः प्रविशति शैब्याद्युमत्सेनानुगम्यमानः सुवर्चाः।)

**सुवर्चाः**– प्रसादात्पार्वतीप्राणप्रियस्य किंनु दुर्लभम्।
एष राजाद्युमत्सेनः शैब्या चेयमुपागता॥ ३६।

अश्वपतिः–(सहर्षमुत्थाय।) भगवन् सुवर्चः ! यावज्जीवम् विस्मर्योयमुपकारो वः। ( इति प्रणमति। )

सुवर्चाः– महाराज ! कोयमुपकारः।

अश्वपतिः– राजर्षे ! प्रणमामि । ( इत्युक्त्वाश्रूणि मुंचन्नालिंगति। )

द्युमत्सेनः– ( सास्रं सगद्गदकंठं। प्रियमित्र ! कल्याणपरंपरामनुभूयाः। ( इत्यश्रूणि मुंचन्नालिंगति। )

मालवी– देवि शैब्ये ! प्रणमामि।

शैब्या–वत्से ! पूर्णाभिलाषा भूयाः।(इत्युक्त्वा मिथः परिष्वजतः। )

ऋषिपत्न्यः– देव्यौ शैब्यामालव्यौ ! संगते युवां विलोक्याद्य परमानंदमग्नानि नः स्वांतानि।

शैब्यामालव्यौ– अयि मुनिपत्न्यः ! सोयमत्र भवतीनां भवतीनामाशिःप्रभावः।

द्युमत्सेनः– आर्यास्तपोवनवासिनस्तपोधनाः ! प्रणामपूर्वं क्षमापयामि युष्मान्। यतः–

अविमृष्यकारिता मे निःसीमश्रमश्रुजश्च चिंतार्तान्।
अकरोद्युस्तदपारे लज्जाजलधौ निमज्जामि॥ ३७॥

ऋषयः–राजन् ! विलसत्युपचारचातुरी किम्
भृशमुत्पन्नविशुद्धसौहृदानाम्।
विलसेद्यदि तर्हि किंनु तेषा-
मपरेषां च भवेद्विलक्षणत्वम्॥ ३८॥

अश्वपतिः— मुनयो यद्यप्येवमेतत्तथापि कदाचित्केषांचित्
अस्तोकसौहृदालोकसंतोषविवशात्मनाम्।
नेत्रांबुभिः समं वक्त्रान्निःसरत्युपचारगीः॥ ३९॥
ततो राजर्षेरुक्तिरपि युक्तैव।
ऋषयः— (सस्मितं।) महाराजेनापि राजर्षेः पक्षः स्वीकृतः।
द्युमत्सेनः— वत्स अश्वपते! अतर्कितेनामुना युष्मद्दर्शनेन परमेश्वरस्यापरिमितमुपकारं मन्येहं।
अश्वपतिः— आर्य राजर्षे! व्यतीतायां तमिस्रायां दृष्टो देव्या कश्चिद्दुःस्वप्नस्तत उद्विग्नचित्ताया देव्या अनुमतेन तपोवनमेतदुपगंतुं निशीथ एव राजधानीतः प्रस्थिता वयं।
द्युमत्सेनः—देव्या दुःस्वप्नेनापि मयि सुस्वप्नायितं। ततस्ततः।
अश्वपतिः— ततोद्य व्यतीतार्द्धयामायां त्रियामायां प्राप्ता वयमेनामाश्रमभूमिम्।
द्युमत्सेनः— अहो पद्भिरेव यामैर्यूयं राजधानीत इमां भूमिं प्राप्ताः सोयं दिव्याश्वानां प्रभावस्ततस्ततः।
अश्वपतिः— तत एनां पर्णशालामेनं माधवीमंडपागमाः पर्णकुटीश्च भवद्भिर्विना शून्या विलोक्य दुस्तरदुःखोदधिनिमग्ना वयममीभिरेव मुनिभिरुद्धृताः स्मः। इदानीं युष्मद्दर्शनानंदमनुभूय परमेश्वरोपकारं च शिरसाभिवंद्य वत्सयोः प्रवृत्तिं ज्ञातुमिच्छामः।
द्युमत्सेनः— प्रियमित्र! युष्मत्प्रयाणानंतरं तामेनेव वत्सया सावित्र्या यस्मात्त्रिरात्रं कर्तुमिच्छामीति विज्ञप्तोहं।

अश्वपतिः– भगवता नारदेनैतदुपदिष्टं । ततस्ततः ।

द्युमत्सेनः– वत्साया अत्याग्रहमवलोक्यानुमोदितं मयैतत् ।

मालवी– ( स्वगतं । ) किंसिद्धतेनैव पराभूता मे वत्सा । अथ-
वा न संभवत्येतत् ।

अश्वपतिः– उचितमेतद्विहितं । ततस्ततः ।

द्युमत्सेनः– ततः संवत्सरे पूर्णेऽद्य समाप्तिमाप्तं व्रतमेतत्तत
उपवासत्रयी तया विहिता ।

अश्वपतिः– तदप्युपदिष्टमेव महामुनिना नारदेन । तत-
स्ततः ।

द्युमत्सेनः– अद्य प्रातःसमये वनमभिगंतुं प्रस्थिते वत्से
सत्यवति–

> पितरौ द्रष्टुमिच्छामि वनमेतन्मनोहरम् ।
> मीत्या तदनुजानीतं तत्राभिगमनाय माम् ॥ ४० ॥

इति वत्सया विज्ञप्तावावां ।

अश्वपतिः– ( स्वगतं । ) न प्रायो वत्साया निष्प्रयोजना प्र-
वृत्तिः । ततस्ततः ।

द्युमत्सेनः–ततः– तथा तथावां विज्ञप्तावपि वत्रं द्रवेद्यथा ।
भणयेनार्जवेनापि दैन्येन बद्धहस्तया ॥ ४१ ॥

तदीयविज्ञप्तिश्रवणविवशस्वांततया चावाभ्यां वनगमनम-
प्यनुमोदितम् ।

मालवी– ( स्वगतम् । ) मन्ये नारदोपदिष्टोयं वासरस्तदद्य
मया सहैव गंतव्यमिति वत्साया आग्रहमूलं ।

अश्वपतिः— ततस्ततः ।

द्युमत्सेनः— ततः सायंसमयात्पूर्वमेव प्रत्यागमिष्याव इत्युक्त्वा प्रस्थितावपि तौ नासायंसमयानंतरमप्यागतौ ततोनंतचिंतातुरचित्तौ प्रस्थितावावां तदभिमुखं गंतुम् ।

अश्वपतिः— एवमेतदकुशलशतशंकाकुलानि सुहृदां चेतांसि । ततस्ततः ।

द्युमत्सेनः— भ्रांतावखिलान्यतिघनानि वनानि तानि
श्रांताविततत उरुस्खलनैरथांधौ ।
निःसंख्यकंटकविभिन्नविदीर्णपादौ ।
नद्यास्तटे क्वचिदुपद्रुममाविशावः ॥ ४२ ॥

अनंतरं चाकस्मात्प्रणष्टापि दृष्टिरुपलब्धास्माभिः । प्रणष्टमाप्तयापि तया दृशा न परितोषमुपययौ स्वांतं नौ ।

दृष्टिर्हि दृष्याः प्राणानामपि प्राणा हृदश्च हृत् ।
जीवितं जीवितस्यापि वत्सावेवावयोर्हि तौ ॥ ४३ ॥

संप्राप्तनेत्राभ्यां चावाभ्यां पुनर्वनानि सरित्तीराणि छायावृक्षा लतामंडपानि कुंजभवनानि च विलोकितानि परं न क्वापि तौ भद्रमुखौ विलोकितौ । तदनु तदनवलोकनदुःखादंधाविव मूकाविव बधिराविव मत्ताविवोन्मत्ताविव मूढाविव जातौ मूर्छया पतितौ च ।

अश्वपतिः— संतु दुःखसहस्राणि व्याधीनामयुतान्यपि ।
सत्पुत्रविरहव्याधेस्तुलनां यांति तानि किम् ॥ ४४ ॥
ततस्ततः ।

**द्युमत्सेनः**– ततो यावन्मुमोच मूर्छा नौ तावद्भगवानयं सुवर्चा लोचनातिथितामाससाद तन्मुखादवगतयुष्मदागमनवृत्तांतावत्रागतौ स्वः । एवमतिमंदभाग्यवत्तया वंचितौ स्वः । ( इत्युक्त्वाश्रूणि मुंचति । )

**शैव्या**– ( सास्रं । )

> हे सत्यवन् क्वनु गता पितृपादभक्ति-
> र्हाहा क्व वाथ गलिता तव मातृभक्तिः ।
> वत्से क्व साश्वपतिपुत्रि तवापि सर्व-
> श्लाघ्या स्वकीयगुरुभक्तिरहो विलीना ॥४५॥

( इत्युच्चैर्विलपंती मूर्छां नाटयति । )

**मालवी**– प्रियसखि शैव्ये ! शैव्ये ! किमेतत् । उचितमिदं किं ते । आर्यायामपीत्थं गलितधैर्यायां किं नः शरणं । तत्समाश्वसिहि समाश्वसिहि ।

**अश्वपतिः**– राजर्षे ! त्वदीयैरगण्यैः पुण्यैरेव वत्सं सत्यवंतं वत्सां सावित्रीं च द्रक्ष्यामस्तत्समाश्वसिहि ।

**सुवर्चाः**– आर्य राजर्षे ! वत्सायास्तपःसदाचारं शीलं च विलोक्य तयोः कुशलंप्रत्यसंशयं मे चेतः ।

**गौतमः**– महाराजाश्वपते ! राजर्षे द्युमत्सेन ! अस्ति कुशलं वत्सयोरित्यशंकं मे प्रतिभाति ।

**गौतमशिष्यः**– करतलामलकवदखिलं जगदवलोकयतां निगमागमपारदृश्वनां निर्व्यलीकभक्तिभरवशीकृतका-

सायिनीकांतानामाबाल्यतः प्रतप्तदुष्करतपःप्रकराणाम-स्मद्गुरूणां न वचस्सु वैतथ्यं संभवेत्तद्ब्रवीमि भद्रमयुद्रं तयो-र्विलसतीति ।

भरद्वाजः– वत्सावश्वपतिद्युमत्सेनौ ! वत्सायाः सावित्र्याः शारीराणि लक्षणानि निष्प्रतिमां सौभाग्यसंपदं निवेदयं-ति तत्तयोश्चिंता न विधेया ।

दाल्भ्यः– अकस्माद्युवयोर्नेत्रप्राप्तिरेव तयोः कुशलं शंसति ।

आपस्तंबः– राजन् ! सांप्रतं शांतां दिशमाश्रित्य पशवः पक्षिणश्च शब्दं कुर्वंति ततो वर्तते वत्सयोः कुशलमित्यशं-कमवगंतव्यं ।

धौम्यः– वत्सस्य सत्यवतो वत्सायाः सावित्र्याश्च सद्गुणा एव भाविनीं श्रेयःपरंपरां निवेदयंति तन्न चिंतास्थानमेतत् ।

द्युमत्सेनः– प्रियमित्राश्वपते मान्या मुनयश्च युष्माकं सर्वे-षां भवंतु सत्या गिरः श्रीपार्वतीप्राणप्रियप्रसादात् इत्याशा-से । युष्मद्वचोभिर्धैर्ये धृतमपि चेतः स्खलति मे । किंचास्त्ययं निशीथो यामद्वयांतरितश्चातःपरं प्रातःसमयस्तावद्वत्सयो-र्मुखकमलदर्शनमंतरा न स्थास्यंति नो प्राणा एतौ चाश्वप-तिमालव्यौ केवलमस्मदाश्वासनायैव धैर्यं धृत्वा स्थितौ परं तयोरपि प्राणा आप्रातःसमयं स्थातुमशक्ताः ।

दुःस्वप्नदर्शनादेव यावुद्विग्नाविलगतौ ।
वृत्तांतेऽस्मिन् तयोर्दुःखं कीदृक्स्यात्तद्विचिंत्यताम् ॥ २८ ॥

तदस्माकं चतुर्णां जीवनं तु युष्मदधीनमेव। (इत्युक्त्वाश्रूणि मुंचति।)

गौतमः— राजर्षे! निश्चिंतो भव।

> आप्रभातं तु मद्विद्याप्रभावाद्विस्मृतापदः।
> युवानहं करिष्यामि तावत्तावागमिष्यतः॥ ४७॥

द्युमत्सेनः— भगवन्! महानयमनुग्रहः।

गौतमः— राजन्! विद्याबलेन किमपींद्रजालं दर्शयिष्यामि तदादितोंतपर्यंतं धैर्यमालंब्य विलोकनीयं।

अश्वपतिः— भगवन्! यथायुष्मदाज्ञं करिष्यामः।

गौतमः— (नेत्रे निमील्य क्षणं विद्याध्यानं नाटयित्वोत्थाय मयूरपिच्छं परितो भ्रामयति।)

सर्वेपि— (सविस्मयं पश्यंति।)

अश्वपतिः—(साश्चर्यं सर्वतोवलोक्य) राजर्षे! किमेतदभिजानासि।

द्युमत्सेनः— प्रियमित्र! पुराणेतिहासोक्तैर्लक्षणैर्विचार्यमाणे भगवतो धर्मराजस्यास्थानमंडप इवायं लक्ष्यते। तथाहि

> सेयं संयमिनी चतुर्भिरमलैस्तुंगैर्युता गोपुरैः
> प्राकारेण सुतप्तकांचनमयाकारेण चैवावृता।
> सेयं धर्मसभा च भाति विमलस्वांतैर्मुनींद्रैर्वृता
> धर्माधर्मविवेचनातिनिपुणै राजर्षिभिश्चान्विता॥४८॥

नेपथ्ये— जयतु जयतु महाराजाधिराजो धर्मराजः।

अश्वपतिः– राजर्षे ! युक्तमुक्तंभवद्भिः। सोयं धर्मराजप्रती-
हारकोलाहलः श्रूयते।

(ततः प्रविशति चित्रगुप्तेनानुगम्यमानः सपरिवारो
धर्मराजः।)

धर्मराजः–(सिंहासनमधिरुह्य प्रबद्धपुष्पपूर्णांजलिरूर्ध्वमवलोक्य।)

दीनबंधो दयासिंधो सर्वज्ञ सर्वशक्तिमन्।
प्रणामपुष्पांजलयः संतु त्वत्पदयोरमी ॥ १ ॥
अधर्मो धर्मवद्भाति क्वचिद्धर्मोप्यधर्मवत्।
धर्माधर्मपरिज्ञानं त्वत्कृपाधीनमेव तत् ॥ २ ॥
अप्रतर्क्यामनिर्देश्यामवाङ्मनसगोचराम्।
धर्मज्ञ धर्मस्य गतिं त्वमेव वेत्सि नापरः ॥ ३ ॥
तत्त्वत्पदाब्जदासाय धर्माधर्मविवेचने।
अभ्रांतिमदसंदेहं ज्ञानं मे कृपयार्पय ॥ ४ ॥
त्वदर्पिताधिकारस्थो न प्रमाद्येदयं यथा।
तथा कुरु कृपापाथोनाथ नाथ नमोस्तु ते ॥ ५ ॥

(इत्यंजलिस्थानि पुष्पाण्यूर्ध्वं प्रक्षिपति।)

अश्वपतिः– राजर्षे ! धर्मराजोपि धर्मासनमधिरुह्य विशु-
द्धबुद्धिसिद्धये परमेश्वरमेवं प्रार्थयति।

द्युमत्सेनः– सखे !

दुर्लभं शुद्धबुद्धित्वमपि बुद्धिमतामहो।
दयावलोकलहरीं विनाश्रीमत्पिनाकिनः ४९

धर्मराजः— प्रियप्रधान चित्रगुप्त !

चित्रगुप्तः— ( बद्धांजलिरुत्थाय । ) आज्ञापयतु देवः ।

धर्मराजः— अद्य कत्यपराधिनः समागताः ।

चित्रगुप्तः— शतं क्षुद्रापराधाढ्याः शतं मध्यापराधिनः ।
शतं महापराधाढ्याः शतमत्यपराधिनः ॥ ६ ॥
आगतास्ते मया युष्मदाज्ञया यमयातनाः ।
प्रापितास्तेषु सर्वेव देवदेवावशेषिताः ॥ ७ ॥

धर्मराजः— समाहूयंतां ते ।

चित्रगुप्तः— यथाज्ञा देवस्य । ( पृष्ठतोवलोक्य । ) वज्रतुंड ! तीक्ष्णदंष्ट्र ! त्वरितमानयतमत्रापराधिनः ।

वज्रतुंडतीक्ष्णदंष्ट्रौ— यथाज्ञा । ( इत्युक्त्वा बहिर्निष्क्रम्य पुनः प्रविश्य च ) देव ! सोयं महापराधी । ( इति दर्शयतः । )

धर्मराजः— ( विलोक्य । ) चित्रगुप्त ! किमपराद्धमनेन का च यातनानुभोक्तव्येति विलोक्यताम् ।

चित्रगुप्तः— ( पत्राणि विलोक्य । ) देव !

अतुलवमपराबलावलोके
प्रहितमनेन सपापमात्मचक्षुः ।
तदनुलवममुष्यनेत्रयुग्मं
गतकरुणालवमुद्धरंतुगृध्राः ॥ ८ ॥

धर्मराजः— ( स्वगतं । ) उचितमेतदस्याधमस्य । ( प्रकाशम् । ) ( सक्रोधं । ) वज्रतुंड ! दुष्टेनामुना यावन्निमेषं परांगनाः पापया

दृशा विलोकितास्तावद्वर्षसहस्रं वज्रतुंडैर्गृध्रैः प्रतिक्षणमुत्पाटितलोचनयुग्ममम‍ुं विधेहि ।

वज्रतुंडः– यथाज्ञा महाराजस्य । ( इति भयाद्रुदता पापिना सह निष्क्रांतः । )

तीक्ष्णदंष्ट्रः–( भयचकितलोचनेन पापिना सह प्रविश्य । ) देव ! द्वितीयोयमपराधी । ( इति दर्शयति । )

धर्मराजः– ( उन्नतभ्रकुटीतटभीषणं विलोक्य । ) चित्रगुप्त ! कीदृशान्यस्य कृत्यानि ।

चित्रगुप्तः– देव ! देवनिंदा वेदनिंदा निंदा चापि द्विजन्मनाम् ।
विहितानेन न स्वप्नेप्युक्तं सत्यं वचः क्वचित् ॥९॥

धर्मराजः– धिक् ते जन्म जीवितं च । ( इति पापिनं तिरस्कृत्य तीक्ष्णदंष्ट्रं प्रति । ) तीक्ष्णदंष्ट्र !

तीक्ष्णदंष्ट्रः– आज्ञापयतु देवः ।

धर्मराजः– निष्ठुरक्षुरधाराभिश्छिन्नजिह्वं विधेह्यमुम् ।
पुनरुत्पन्नजिह्वं तं छिन्नजिह्वं पुनः कुरु ॥ १० ॥
एवं यावंत्यक्षराणि प्रोक्तान्येतेन पापिना ।
निंदापराण्यसत्यानि तावद्वर्षं विधीयताम् ॥ ११ ॥

तीक्ष्णदंष्ट्रः– यथाज्ञा देवस्य । ( इत्युक्त्वा निष्क्रांतः । )

असिरोमा– ( पापिना सह प्रविश्य । ) देव ! तृतीयोयं पापी । ( इति दर्शयति । )

धर्मराजः– ( सरोषं विलोक्य । ) चित्रगुप्त ! ब्रूहि कृत्यान्येतस्य ।

चित्रगुप्तः– (क्षणं विचिंत्य।) हंत निःसीमानोऽस्य पापप्रसराः।
श्रूयतां– जननीतनुजन्मनोर्मिथो

जनकेनापि सहात्मजन्मनः।
सुहृदः सुहृदाथ कारितः
कलहोऽनेन कठोरचेतसा ॥ १२ ॥
अपि सोदरयोर्मिथः कलिः
कुलकांताकुलकांतयोर्मिथः।
अमुना कपटैकवार्द्धिना–
नुदिनं कारित उक्तियुक्तिभिः ॥ १३ ॥

धर्मराजः– धिक् त्वां रे कर्मचंडाल मा मे दर्शय ते मुखम्।
दुष्ट दुष्कर्मसंपुष्ट रुष्टस्ते नूनमीश्वरः ॥ १४ ॥
असिरोमन्– कर्मचंडालताचंडालिंगनानदंदूषितम्।
विदार्य रयादेनं करपत्रेण तं द्विधा ॥ १५ ॥

असिरोमा– यथाज्ञा देवस्य। (इति पापिना सह निष्क्रांतः।)
कालमुखः– (प्रविश्य।) महाराज! चतुर्थोयमपराधी। (इति दर्शयति।)
धर्मराजः– (विलोक्य।) चित्रगुप्त! किमेन एतस्य।
चित्रगुप्तः– महाराज! सर्वेषामनेन निष्कारणं संतापितान्यंतःकरणानि।
धर्मराजः– कालमुख! गच्छैनं लोहमय्यां तप्तवालुकायां (निःक्षिप क्षिप्रं।)

कालमुखः–यथाज्ञा धर्मराजस्य । ( इति सह पापिना निष्क्रांतः।)

शुम०– सखे ! पापानुरूपदंडोयं देवो दंडधरः स्वयम्।

अश्व०–राजर्षे ! तादृग्धर्मधुरीणत्वाद्धर्मराजः स ईर्यते॥९०॥

शैब्या– प्रियसखि मालवि !

सुहृद्भेदकरो दुष्टः करपत्रेण दार्यताम्।
इत्याज्ञां धर्मराजस्य श्रुत्वा तुष्टं मनोत्र मे ॥ ९१ ॥

मालवी– देवि शैब्ये ! एवमेतत्।

महापापसहस्राणि घोरघोरतराण्यपि ।
सुहृद्भेदकरस्याग्रे क्षुद्राण्येव भवंत्यहो ॥ ९२ ॥

ऋषयः–( परस्परं। ) अहो महानुभावेनामुना मुनिराजेन गौतमेन स्वकीयेंद्रजालविद्याप्रदर्शनव्याजेन सांसारिकेंद्रजालमुक्तिमार्गः प्रदर्शितः खलु ।

मकरमुखः– ( पापिना सह प्रविश्य । ) देव ! पंचमोयमपराधी। ( इति दर्शयति । )

धर्मराजः– ( विलोक्य ) चित्रगुप्त ! वर्ण्यतामस्य कृत्यानि ।

चित्रगुप्तः– पैशून्यममुनाऽजस्रमनुघस्रं विनिर्मितम् ।
मातापित्रोः सद्गुरूणां निंदानानंदतः कृता ॥ १६ ॥

ततःपरं देवः प्रमाणं ।

धर्मराजः– मकरमुख प्रमुग्धस्यामुष्य रसनां विदार्य रसनां त्वं ।
रसनाग्रेद्विरसनमेनं द्विरसनतानेन-पत्कृना पूर्णम् ॥१७॥

मकरमुखः–यथाज्ञा देवस्य । ( इत्युक्त्वा पापिनासह निष्क्रांतः। )

वक्रतुंडः– ( प्रविश्य । ) महाराज ! षष्ठोयमपराधी । ( इति दर्शयति । )

धर्मराजः– ( विलोक्य । ) चित्रगुप्त ! कोस्यापराधः ।

चित्रगुप्तः– देव !–देववेदब्राह्मणानां मातापित्रोस्तथा गुरोः ।
निंदानुदिनमानंदादभंडादमुना श्रुता ॥ १८ ॥

धर्मराजः– वक्रतुंड !–प्रतप्तलोहकीलाभ्यां विभिन्नश्रवणेंद्रियः ।
प्रतिक्षणमयं पापी पीड्यतां यातनागृहे ॥ १९ ॥

वक्रतुंडः– यथाज्ञा देवस्य । ( इत्युक्त्वा पापिना सह निष्क्रांतः । )

पिंगाक्षः– ( प्रविश्य । ) देव! सप्तमोयं पापी । ( इति दर्शयति । )

धर्मराजः–(विलोक्य ।) चित्रगुप्त ! कीदृशान्यस्याचरणानि संति ।

चित्रगुप्तः–देव ! दुष्टेनानेनानेकानि देवालयानि विशाला धर्मशालाः सुधाकरप्रभाः सभा असंख्यसत्वपाः प्रपाश्च निष्कारणं समूलमुन्मूलिताः ।

धर्मराजः–पिंगाक्ष !–उद्यच्चटचटाशब्दं द्रवद्रुधिरकर्दमम् ।
त्वगस्योत्पाट्यतां शस्त्रया जातां जातां पुनः पुनः ॥२०॥

पिंगाक्षः– यथाज्ञा देवस्य । ( इत्युक्त्वा पापिना सह निष्क्रांतः । )

धर्मराजः– चित्रगुप्त ! अस्ति कश्चिदवशिष्टः ।

चित्रगुप्तः– देव ! न कश्चिदिदानीमवशिष्यते ।

धर्मराजः– प्रियप्रधान ! मद्यपास्ते तप्तलोहरसपानमनुभाविताः सुवर्णस्तेनानां त्वचास्तिलशश्छेत्तुमाज्ञप्ताः किंकराः परघ्नाः कुंभीपाके ब्रह्मघ्नास्तामिस्रे गुरुदारहरा अंधतामिस्रे तत्संसर्गिणश्चासिपत्रवने पातिताः ।

चित्रगुप्तः– देव! युष्मदाज्ञोत्तरक्षण एव सर्वमेतदनुष्ठितम् न किचिदवशिष्यते।

धर्मराजः– (स्मृतिमभिनीय।) ह्य आगतः कर्मचंडालश्चोरजारशिरोमणिः प्रतप्तलोहसूर्म्याश्लेषक्लेशमनुभावितो नवा।

चित्रगुप्तः– नाथ! गतेन्हि प्रातःकालादारभ्य सायंसमयपर्यंतं तत्सेवायामेव क्षयमुपगताः सकला मे कालकलाः।

धर्मराजः–( सपरितोषं। ) प्रियमित्र! प्रियं नः प्रियं नः। यतः-

जारं वीक्ष्य दुराचारं रोषावेशावशाशयः।
मन्ये तदर्थं न्यूनानि यातनानियुतान्यपि॥२१॥

चित्रगुप्तः– भगवन्नेवमिदं।

सर्वेपि धर्माः प्रलयं यांति हा जारकर्मणा।
सर्वेप्यधर्मा उदयं यांति तेनैव चानिशम् ॥२२॥
तस्माज्जारदुराचारपरेतिपामरे नरे।
यातनानियुतेपि नानयोस्त्यदयोदयः॥ २३॥

धर्मराजः– प्रिय चित्रगुप्त! सांप्रतं कतमनरकनिपतितान् पतितान् विलोकयिष्यामः।

चित्रगुप्तः– देव! महारौरववासिन एवाद्य विलोकनीयाः।

धर्मराजः– भवतु तथा कुर्मः। (इत्युक्त्वा चित्रगुप्तसमवेतश्च निष्क्रांतः।)

(ततः प्रविशंति महारौरववासिनोनुतापिनः पापिनः।)

प्रथमः– ( सर्वाभिनः सर्वान् विलोक्य।) हा सहवासिनो मे!

नातःपरं केनापि किमपि पातकं विधेयं। या या पापकर्मणः परिणतिरनुभूता सा सा न मया शक्यते वर्णयितुम्। वर्षसहस्राणि केवलमेतद्रौरवनिवासव्यसनगौरवमनुभवतो मे व्यतीतानि। हा कदास्मान्मुक्तो भविष्यामि।

द्वितीयः– सखे! किमेवं केवलं रौरवनिवासक्लेशेनैव व्यथोसि। मया खलूत्तरोत्तराधिकक्लेशवर्षिणोष्टाविंशति नरका अप्यनुभूताः।

तृतीयः–मन्ये नास्माकं मध्ये कश्चित्तादृशो यो द्वित्रानेव नरकाननुभूय मुच्येत।

चतुर्थः– प्रियभ्रातरो मे।

यो पापाध्वनि मामयोजयदभिज्ञास्यामि तं चेदहं
मुक्तोस्मान्नरकात्तदा तु तिलशश्छेत्स्यामि तीव्रासिना।
कामं तेन विरुद्धरोषविवशस्त्वांतः पुनर्यातना
देवः संयमनीश्वरोर्पयतु मे सर्वाः सहिष्येत्र ताः ॥२४॥

प्रथमः– यदि मुक्ता भविष्यामो नरकेभ्यः कदाचन।
तर्हि कर्हिचिदप्येवं करिष्यामो न पातकम् ॥२५॥

बालां प्रशस्तकुलजां गुणरूपशील-
शालामदूषणलवां निजधर्मपत्नीम्।
वेश्यानुरक्तहृदयोत्यदयोत्यजं हा
वृद्धावपि स्वपितरौ श्रितरौद्रवृत्तिः ॥ २६ ॥

हा कदाचिदस्मान्मुक्तो भविष्यामि तथापि तावेव पितरौ ता-

मेव च धर्मपत्नीं लप्स्यामि किम्। तन्नारकीयतापोपशांतावपि स्वकृत्यानुतापोपशांतिर्दुर्लभा मे।

द्वितीयः–हा मातः! कासि। हा पितः! पाहि। हा सहोदराः! साहाय्यं मे कुरुत। हा पापान्याचरता न मया किमपि विचारितं। मित्रैरपि पाप एव पथि प्रेरितोहं। यौवनमदांधतमतया च न मयापि हितमहितं वा विलोकितं।

तृतीयः– सकलमनुभवात्र जीव सर्वो-
प्युचिततमस्त्वयि दंडपाणिदंडः।
उपकृतिशतकारिणामपि त्वं
त्वपकृतिमेव समाचरः कृतघ्नः ॥२७॥

(सखेदं।) काले मुक्ता भविष्यंति महापातकिनोप्यमी।
नाकल्पं मम मोक्षाशा हा कृतघ्नशिरोमणेः।२८।

चतुर्थः–हा हा नैतन्मया ज्ञातं यद्रहस्यपि मत्कृतम्।
जानाति कश्चित्तच्छिक्षामसह्यां चार्पयिष्यति ॥२९॥ इति।
तेन न मया किमपि विचारितं। परमविश्वासवता तेन विप्रेण न्यासीकृतं वित्तमप्यदयचित्तोहमहरं। हा किमेतन्नीचमाचरितं। हा कीदृशं तापमनुभविष्यति तदंतःकरणं। सर्वस्वप्रणाशो हि दुःसहः सर्वेषां।

पंचमः– पीतोस्त्यपेयनिचयोनुदिनं मदर्था-
दात्तस्त्वभक्ष्यनिचयोपि च भुक्त एव।
दुष्पूरणोदरदरीपरिपूर्तिकामो
हा नीचनीचमपि कृत्यमचारिषमीदृक् ॥३०॥

एकोपि नरकः पापभेदाद्विद्वान् खलु ।
न चेत्कथं मत्सदृशी पीडान्येषां न जायते ॥३१॥

षष्ठः– हा मदीयानि नीचाचरणानि मामेव कंपयंति ।

धिक्कष्टं कतिपयवासरावशिष्टा-
न्यायुष्येप्यहह मया निजाः स्वसारः ।
विक्रीता अपि तनयाश्च धिग्धिगीदृ-
ग्दुष्कृत्यान्मृतिरपि जीविताद्वरा मे ॥३२॥

सप्तमः– हा धिङ्मां धिङ्मे मतिर्धिङ्मे जन्म धिङ्मे जीवितं च येन मया मयि पुण्यबुद्धयोपि न पुण्यया दृशा विलोकिताः ।

मयि विहितपरेश्वरैकभावा
अपि सकलाः सुकुलांगना व्यपश्यम् ।
प्रतिदिनमतिपापचक्षुषाहं
कथमिव हा नरकान्ममास्तु मुक्तिः ॥३३॥

हा स्मारं स्मारं मत्कृत्यानि ममैवात्मा मां धिक्करोति ममैवात्मा मां तिरस्करोति ममैवात्मा मामुपहसति मत्त एवाहं लज्जायां निमज्जामि सोहं कथमिव मुक्तये धर्मराजं विज्ञापयिष्यामि । ( इति सर्वेपि स्वानि स्वानि कृत्यानि संस्मृत्योच्चै रुदंति । )

अश्वपतिः– राजर्षे ! इंद्रजालावलोकनादलौकिकोऽतुलश्च कोपि लाभ उपलब्धः ।

द्युमत्सेनः– मित्रमणे ! महात्मनां समागमानुभावस्तादृश एव ।

शैव्या– सखि मालवि ! कथापथातीतव्यथावतोतिकरुणं रुदतो विलपतश्चामून् विलोक्यापि कथमनुत्पन्नदयोदयो भगवान् भास्करिः ।

मालवी– देवि !

दयार्द्रहृदयोप्येवं यदि कुर्यादयं दयाम् ।
पापेष्वसंख्यपापेषु नयः स्यात्सजयः कथम् ॥२३॥

(ततः प्रविशति चित्रगुप्तेनानुगम्यमानः सपरिवारो धर्मराजः ।)

दूतः– तूष्णीं तिष्ठत रे सर्वे नरा नरकवासिनः ।
किं कौलेयकवत्क्रूरः कोलाहल उदीर्यते ॥ २४॥
शुभाशुभानां सर्वेषां कर्मणां फलदः स्वयम् ।
एष श्रीभगवानत्र समागच्छति धर्मराट् ॥२५॥

धर्मराजः– किमेते कथयंति ।

चित्रगुप्तः– देव ! न किंचित्कथयंति । केवलं स्मारं स्मारं स्वकृत्यानि सानुतापं विलपंति ।

धर्मराजः– निष्फलोयमनुतापो निरर्थाश्चामी विलापाः । आदावेव निःसारेस्मिन् संसारे किं सत्यं किमसत्यं किं कृत्यं किमकृत्यं किं हेयं किमुपादेयं किं हितं किमहितं नेति स्वप्नेपि न विचार्य प्रत्युतासत्यमेव सत्यं हेयमेवोपादेयमकृत्यमेव कृत्यमभक्ष्यमेव भक्ष्यमपेयमेव पेयमहितमेव च हितं यौवनमदमत्ततया यावदायुःस्वीकृत्येदानीं विहितोनुतापः किं कुर्यात् । स्वीय एषात्मात्रापराधो नान्यः ।

चित्रगुप्तः— देव ! भूतार्थैव भगवत उक्तिः । तदास्वेते वयमेव विद्यावंतो वयमेव दाक्षिण्यवंतो वयमेव विचारवंतो जगति नान्ये केचनेति गणयंतः शास्त्रश्रवणमपि किमर्थं कुर्युः । विना च शास्त्रश्रवणं कृत्याकृत्यविवेको दुर्लभ एव ।

धर्मराजः— चित्रगुप्त ! विषयविषावेशाविवशाशयानां शास्त्रश्रवणमप्यकिंचित्करमेव । पश्यामुं कर्मचंडालं । कति कति वानेन शास्त्राणि नालोकितानि नाधीतानि न श्रुतानि च तथापि कृत्यानि तु चंडालैरपि निंद्यान्याबाल्याद्यावज्जीवं विहितानि । मन्येमुष्याग्रे व्रात्योप्यव्रात्यः पतितोप्यपतितश्चंडालोप्यचंडालोऽधमोप्युत्तमश्च यतोयं धर्माचार्यो भूत्वाप्यधर्माचार्यचक्रवर्तितामनुबभूव । ( पापिनंप्रति । ) धिग्रे कर्मचंडाल ! हतोसि ! ( इत्युक्त्वा दंडं प्रहर्तुमुद्यमते । पापीत्रासान्मूर्च्छां नाटयन् पतति । )

चित्रगुप्तः— महाराज महाराज क्षम्यतां क्षम्यतां विभो ।

हतोयं स्वेन पापेन पापः किं हन्यते पुनः ॥३६॥

किंच—संत्येव व्याघ्रवक्त्राद्याः शतशः सेवकाः प्रभोः ।

दंड्यदंडप्रदातारः श्रमेणालं तदत्र वः ॥३७॥

( इत्युक्त्वा प्रणमति । )

धर्मराजः— ( दंडं विमुच्योपविश्य च । ) चित्रगुप्त ! किं करोमि पापिजनवदनविलोकनोत्तरक्षण एव परां काष्ठामुपगच्छति कोपावेशो मे ।

चित्रगुप्तः— भगवन् !

कोपोपि तावकः सोयं पापकाननपावकः ।
यस्मिन् प्राणिसुवर्णानि शुद्धिं यांति सहस्रशः ॥ ३८ ॥

(ततः प्रविशतो व्याघ्रमुखवराहमुखौ ।)

उभौ– (स्वायुधान्यधः संक्षिप्य) नमो देवाय देवसेवायै च ।
(इत्युक्त्वा प्रणमतः ।)

धर्मराजः– वराहमुख हे व्याघ्रमुख दुःखेन केन वा ।
युवां दैन्यमिदं प्राप्तौ शस्त्रं च त्यज्यते कुतः ॥३९॥

व्याघ्रमुखः– देव ! बहुकालं देवस्य सेवा विहिता नातःपरं तां कर्तुमिच्छावः ।

धर्मराजः– किं तन्निदानं ।

वराहमुखः– न किंचिद्देव न किंचिन्निदानं केवलं सांप्रतं नावयोर्देवसेवासमुचिता शक्तिः ।

चित्रगुप्तः– कारणं तु देवाय निवेद्यतां ।

व्याघ्रमुखः– किं बहुना देवस्य पार्श्ववर्तिनौ भविष्यावो न पुनः क्वापि कानपि पापिनो नेतुं गमिष्यावः ।

धर्मराजः– पापिनामानयने किमस्ति युवयोर्दुःखमिति ज्ञातुमिच्छामि ।

व्याघ्रमुखः– देव ! यद्येवमाग्रहस्तर्हि श्रूयतां ।

धर्मराजः– अवहितोस्मि श्रोतुम् ।

व्याघ्रमुखः– गतेन्हि महाप्रधानस्य चित्रगुप्तस्याज्ञया राजकुमारं सत्यवंतमानेतुमगच्छावः ।

वराहमुखः– तदीयायुःसमाप्तिस्तत्र्य सायंसमये भविष्यति परं

तत्स्थलं विलोकयितुं तत्र गतावावां।

व्याघ्रमुखः— एवमेतत्। विस्मृतं मयाऽन्यग्रतया परं शीतोपचार-सहस्रसाहाय्याभ्यामप्यावाभ्यां न तदाश्रमतेजः सोढम्।

धर्मराजः— कस्य तादृशं तत्र तेजो जरीजृंभते।

व्याघ्रमुखः— देव! सत्यवतः पवित्राया धर्मपत्न्यास्तेज एव मादृशान् सहस्रशो भस्मसात्कर्तुं निःशृंखलं खेलति।

धर्मराजः— अप्रतिहतप्रसरं हि पतिव्रताप्रभावप्रभवं ज्योतिः। ततस्ततः।

व्याघ्रमुखः— ततः पुनरद्य प्रातःसमये हठात्तदाश्रमं प्रविष्टयोः पर्णकुटीतोतिदूरस्थयोरप्यावयोस्त्वगियमग्निज्वालयेव तस्यास्तेजोमालया दग्धा। (इति त्वचं दर्शयतः।)

धर्मराजः— (विलोक्य।)

दीप्तदावानलज्वालाग्रस्तशालाभतां गतौ।
युवामितीदं तु सतीतेजोविक्रीडितं वरम् ॥ ४० ॥

ततस्ततः।

व्याघ्रमुखः— ततो हरिणप्लुतेन प्राणत्राणपरायणौ पलाय्यागतौ स्वः। विचार्यमद्य महाराजेन कथा रीत्या सोत्रानेय इति। यथाज्ञप्तावसरं च नानीते कुप्येत्प्रधानपरिवृढश्चित्रगुप्तो भगवांश्च तत। कातरतरौ कर्मैव तत्त्यक्तुमिच्छावः।

धर्मराजः—(सस्मितं।) वत्सौ! नायं युवयोरपरावस्तादृशे स्थले न भवद्भ्यां गंतव्यमहमेव गमिष्यामि। (चित्रगुप्तं प्रति।) चित्रगुप्त! दूरे हि गंतव्यं मे तदेहि गच्छावः।

**चित्रगुप्तः**– यथाज्ञा देवस्य। ( इति निष्क्रांताः सर्वे। )

**मालवी**– नाथ! शंकेहं विचारोयमस्मदीयसत्यवद्विषय एवेति।

**अश्वपतिः**–यद्यद्यथा यथा भावि स्फुटं तत्तत्तथा तथा।
भविष्यति क्रमेणात्र निरुपाया वयं प्रिये॥५४॥

**द्युमत्सेनः**– वत्स! ममापि मतिर्भवन्मतमेवानुसरति।
( ततः प्रविशति साविच्या सह सत्यवान्। )

**सत्यवान्**– प्रिये! आवयोरत्रागमनेन दिनमेतन्मातापित्रोः कल्पकल्पं भविष्यति।

**सावित्री**– प्राणनाथ! तत एवावाभ्यां त्वरया तत्र गंतव्यं।

**सत्यवान्**– अथ किम्। यथा तावत्सच्चिंतया व्याकुलौ तथावामपि तयोश्चिंतया व्याकुलौ स्वः।

**शैव्यामालव्यौ**– ( सहर्षमुत्थाय। ) वत्स वत्स सत्यवन्! वत्से वत्से सावित्रि! वयं सर्वेपि युवयोः समीपे स्मस्त्न्मुंचतमिमामस्मद्विषयिणीं चिंतां (स्वगतं) एनं परिष्वजावः। ( इत्याश्लिष्टमिच्छतः। )

**अश्वपतिः**– आर्ये शैव्ये! प्रिये मालवि! इंद्रजालमेतत्।

**शैव्यामालव्यौ**– ( सलज्जमुपविश्य निःश्वस्य च। ) हा कदासत्ययोर्वत्सयोः सावित्रीसत्यवतोर्दर्शनसुखमनुभविष्यावः। ( इत्युक्त्वाश्रूणि मुंचतः। )

**द्युमत्सेनः**– प्रिये शैव्ये! वत्से मालवि! यथा सर्वोपि लोकः प्रियजनवियोगे प्रियजनचित्रावलोकनाधारेण

दीर्घदीर्घान् विरहवासरान् निर्गमयंति तथास्माभिरपींद्र-
जालरूपयोरपि सावित्रीसत्यवतोर्दर्शनाधारेण रात्रिः
क्षयमुपनेया। तद्विधार्य धैर्यं सर्वमपींद्रजालं विलोकनीयं।

शैव्या– प्राणनाथ! यथायुष्मदाज्ञं वर्तिष्ये।

मालवी– राजर्षे! शिरसा धृताभ्यनुज्ञा वः।

सत्यवान्– बाले बाले रसालेऽस्मिन् फलभारेण सन्नते।
नीलोत्पलदलस्पर्धि महिष्णु क्षणमीक्षणम् ॥ ४१ ॥

सावित्री– ( सहर्षं विलोक्य। ) नाथ! अयं खलु
नतेन सत्फलमाल्याऽश्रितेभ्यः फलवर्षिणा।
भाव्यं सतेति सद्वृत्तं दर्शयन्निव राजते ॥ ४२ ॥

सत्यवान् ( अन्यतो विलोक्य। )
सुपुष्पितामिमां पश्य प्राणप्रेयसि माधवीम्।
पतिव्रतामिव स्वच्छैः स्वयशोभिः समुज्ज्वलाम् ॥ ४३ ॥

सावित्री–नाथ! इमौ कदंबपुन्नागौ महाभाग सुपुष्पितौ।
सखायाविव संश्लिष्टौ स्वनेत्रातिथितां नय॥४४॥

सत्यवान्– प्रिये! इतोऽपि दीयतां दृष्टिः।

सावित्री– ( सप्रमोदं विलोक्य ) इंद्रनीलमणिनीलिमावलेपलोपि-
दलच्छायोतिघनच्छायोऽटवीतटराजइव विराजतेयं वटविटपी
तदेनं प्रणमावः।

सत्यवान्– एवं कुर्वः। ( इत्युक्त्वा प्रणमति। )

सावित्री– ( सभक्त्युद्रेकं प्रणम्य प्रार्थयति। )
नीलैर्दलैः फलैरक्तैर्नीललोहिततां वहन्।

श्रिये जटाजालशाली वटधूर्जटिरस्तु नः ॥४५॥

सत्यवान्– अशोकं कुरु निःशोकममुमंघ्रिप्रहारतः।
आलिंग्यामुं कुरुबकं कुरु पल्लवितं प्रिये ॥ ४६ ॥

सावित्री– ( लज्जया तूष्णीं तिष्ठति। )

सत्यवान्– ( अन्यतो विलोक्य। )
पुंस्कोकिलोत्र किल कोकिलया सहास्ते
पश्य प्रियेत्र रमते कलविंकयुग्मम्।
एते शुका इह वने सहसारिकाभि-
र्मृद्वीं मनोहरतरां च गिरं गिरंति ॥ ४७ ॥

सावित्री– नाथ! अतीव रमणीयमेतत्।

सत्यवान्– नृत्यंत्यमी च शिखिनोंबुदनादहृष्टा
गुंजंति मंजुलमिहालिकुलानि बाले।
पश्य प्रिये करिवरोयमपि स्वकांतां
प्रेम्णाभिषिंचति जलैरिह घर्मतप्ताम् ॥ ४८ ॥

सावित्री– प्राणनाथ! किमप्यन्यादृशमेव प्रेम प्रियासु कुलीनानां कुंजराणां नरकुंजराणां च।

सत्यवान्– प्रिये! एवमेतत्। इतोपि दीयतां दृष्टिः। निबिडतमतमालजालच्छायात्रियामायितेस्मिन् प्रदेशे संनिहितमपि चक्रवाकमपश्यंती चक्रवाकीयं करुणतरं रोरवीति सभयसंभ्रममितस्ततो भ्रमति च।

सावित्री– ( स्वगतं निःश्वस्य। ) हा दैव चक्रवाक्या इवाद्य मे

रात्रिः कीदृशी भविष्यति । नारदप्रोक्त एवायं वासर इति वेपते मे हृदयं ।

सत्यवान्– प्रिये ! कस्मिन् विचारे निमग्नासि ।

सावित्री– न किंचित् प्राणनाथ न किंचित् ।

सत्यवान्– प्रिये ! परिम्लानं मुखकमलमेव ते निवेदयति किमप्यंतर्गतमौदास्यम् ।

सावित्री– प्राणनाथ विलोक्येमां चक्रवाकीं वियोगिनीम् ।

प्राणनाथवियोगार्तिस्मृत्या खिन्नाशयाभवम् ॥८९॥

सत्यवान्– प्रिये ! एहि फलानि चिनुवः ।

सावित्री– यथाज्ञा प्राणनाथस्य । ( इति फलानि चिनुते । )

मालवी– इंद्रजालमेवदिदिति भूयो भूयो भवद्भिरुच्यते परमधुना सावित्र्या स्वगतं यदौदास्यं प्रदर्शितं तेन तु सत्यैवेयं सावित्री नेंद्रजालमयीति मे प्रतिभाति ।

अश्वपतिः– प्रिये ! इंद्रजाले न किंचिन्न संभवतीति ।

सत्यवान्–प्रिये ! पुष्पैः फलैर्दलैश्च पूर्णमेतत्पात्रं केवलमवशिष्टं समिद्ग्रहणं तदहममुना परशुना संपाद्यानयिष्यामि ।

सावित्री– समिधः पाटयिष्यामि प्राणनाथाद्य सत्वरम् ।

सत्यां दास्यां मयि न तच्छ्रमः समुचितो हि ते ९०

सत्यवान्–(सहस्यं) किं प्रिये कमलकोशकोमलः

पाणिरर्हति तवेदृशं श्रमम् ।

तत्कृतं सफलमेव मन्यते

मानसं मम तयानया गिरा ॥९१॥

( इत्युक्त्वा समिधः पाटयति । )

सावित्री– ( स्वगतं । )

अपि स्वल्पायुषं चक्रे यस्तु कल्पायुषं मुनिम् ।
स प्राणवल्लभः सत्याः पातु मे प्राणवल्लभम् ॥ ६२ ॥

मालवी– प्राणनाथ ! दुर्लंघ्या विधिविधित्सेति लोकोक्ति-र्न मृषा । कथमितरथा भवनोपवनवल्लरीपुष्पावचयमात्रप-रिश्रमपात्राणि वत्सस्य गात्राणि समिधां पाटनपाटवमि-दमनुभवेयुः ।

अश्वपतिः– प्रिये ! नन्वेवमेतत् ।

वातवर्षातपक्लेशानभिज्ञमपि या क्षणात् ।
कुर्याद्विधिविधित्सेयं सर्वक्लेशधरं नरम् ॥ ५५ ॥

द्युमत्सेनः– मित्रचिंतामणे !

कीदृशी वेधसो वाञ्छेत्येतद्वेत्तुं न शक्यते ।
अपि देवैर्दानवैर्वा मानवैश्चेत्यसंशयम् ॥ ५६ ॥

सत्यवान्– ( अकस्मादेकतः समिद्भारमन्यतः कुठारं चाधः प्रक्षिप्योपविश्य च । ) प्रिये ! निर्दयं पीडयत्यसह्या शिरो-व्यथा मां ।

सावित्री– ( स्वगतं । ) हा दैव ! किमतःपरं भाविष्यति ।

देवदेव दयासिंधो दीनबंधो दयाद्दृशा ।
जय मृत्युंजय त्राहि त्राहि मे प्राणवल्लभम् ॥ ६३ ॥

( प्रकाशम् । ) प्राणनाथ ! समित्पाटनश्रमसमुत्पन्नेयं शिरोव्य-

येति मे प्रतिभाति तत्क्षणं मदंकोपधानो निद्रामनुभूय प्रशांत-
शिरोव्यथो भविष्यसि।

सत्यवान्– प्रिये ! युक्तैवोक्तिस्ते तथापि

निद्राविद्रावितज्ञाने मय्यत्र तु विलंबिते।
अनंतचिंताविधुरौ पितरौ मे भविष्यतः ॥ ९४ ॥

तन्न निद्रापारतंत्र्यमुपगंतुमिच्छामि।

द्युमत्सेनः– धन्योसि वत्स धन्योसि पुत्रधर्मधुरंधरः।

अश्वपतिः– (सास्रं) ईदृशान्यपि सत्पुत्ररत्नानि संति भूतले॥५७॥

सावित्री– प्राणनाथ! तपत्ययमिदानीमेव किंचिदुन्मुक्तनभोमध्यभागो भगवान् पद्मिनीप्राणप्रियस्ततसायंसमयात्पूर्वमेव यथाश्रमं प्रति गमिष्यावस्तथा त्वां प्रतिबोधयिष्यामि। तन्निश्चितचित्तं निद्रासुखमनुभूयतामिति मे प्रार्थना।

सत्यवान्– एवं चेत्तर्हि तथा करोमि। (इत्युक्त्वा सावित्र्या अंके शिरो निधाय निद्रामुपगच्छति।)

सावित्री– (चेलांचलेन वीजयंती सत्यवत्कुशलाय परमेश्वरप्रार्थनां कुरुते।)

दीननाथ करुणामृतसिंधो भक्तवत्सल जगज्जनक त्वम्।
पार्वतीहृदयवल्लभ शंभो पाहि मे हृदयवल्लभमेनम् ॥ ९५ ॥
यद्यशांसि विमलानि नितांतं गायति प्रणयतः फणिवर्यः।
नांतमेति च तथापि स तु त्वं पाहि मे हृदयवल्लभमेनम् ॥९६॥
स्तोतुमत्र न सुरा असुरा वा शक्नुवंति यमनंतमचिंत्यम्।

आशुतोष परमेश्वर स त्वं पाहि मे हृदयवल्लभमेनम् ॥५७॥
वर्णयामि किमहं मतिहीना त्वद्गुणान् गुणगणार्णव दीना।
त्वं त्वदीयमिति चेतसि मत्वा पाहि मे हृदयवल्लभमेनम्॥५८॥
रंकरंकमपि यत्करुणादृक् राजराजविभवं क्षणमात्रात्।
स्वीयमत्र कुरुते स इह त्वं पाहि मे हृदयवल्लभमेनम् ॥५९॥
त्वत्समः शिव न दीनदयालुर्मत्समा भुवि न दीनतमान्या।
तद्यामिह विधाय दयाब्धे पाहि मे हृदयवल्लभमेनम् ॥६०॥
तावकांघ्रिसरसीरुहदास्याः प्रार्थनां हृदि विधार्य ममैताम्।
आशुतोष शरणागतबंधो पाहि मे हृदयवल्लभमेनम् ॥ ६१ ॥

(क्षणं विश्रम्य पुनः प्रार्थयते।)

तंत्रं न वेद्मि करुणाकर नापि यंत्रं
मंत्रं न च प्रणतपालक वेद्मि कश्चित्।
त्वामेव केवलमवैमि शरण्यमीशं
तस्मादमुं कुशलिनं कुरु मे हृदीशम् ॥ ६२ ॥
तप्तं तपो न न जपोपि च कोपि जप्तो
दत्तं न दानमपि दीनजनेभ्य ईषत्।
त्वामाश्रितास्मि परमेश्वरमंतरात्मन्
तस्मादमुं कुशलिनं कुरु मे हृदीशम् ॥ ६३ ॥
भक्तिं न वेद्मि न च वेद्मि विभो विरक्तिं
नाराधनान्यपि न कान्यपि साधनानि।
त्वां वेद्मि केवलमनाथजनैकनाथं
तस्मादमुं कुशलिनं कुरु मे हृदीशम् ॥ ६४ ॥

शंभो कृतं न सुकृतं किमपि प्रयत्ना-
दाबाल्यतोपि कृतमेव हि दुष्कृतं हा ।
अद्याश्रितोस्यखिलविश्वविपत्तिबंधु-
स्तस्मादमुं कुशलिनं कुरु मे हृदीशम् ॥ ६५ ॥
यं त्वां विदंति न सुरा न सुरारयो वा
नैवेश्वरा अपि विभो विधिविष्णुमुख्याः ।
तं वेद्म्यहं कथमहो तदिदं नमस्ते
देवास्त्विमं कुशलिनं कुरु मे हृदीशम् ॥ ६६ ॥
सेवां विधाय पदयोस्तव देव देवाः
के वापरेपि न परेश परावरेषु ।
प्रापुः परं शिवमतः शिव संश्रिता त्वां
तस्मादमुं कुशलिनं कुरु मे हृदीशम् ॥ ६७ ॥
अल्पायुषोपि शतशो भवतः प्रसादा-
त्कल्पायुषो भुवि बभूवुरिहेंदुमौले ।
मृत्युंजय प्रणतपाल ततः श्रिता त्वां
तस्मादमुं कुशलिनं कुरु मे हृदीशम् ॥ ६८ ॥
माता नस्त्वं त्वमसि च पिता त्वं गुरुस्त्वं च बंधु-
स्त्वंसन्मित्रं पतिरपि विभो त्वं मतिस्त्वं गतिस्त्वम् ।
सर्वस्वं च त्वमसि गिरिजाप्राणबंधो ततस्त्वं
मृत्युं मृत्युंजय जय मम प्राणनाथं च पाहि ॥ ६९ ॥
( इति वदंती मूर्छां नाटयति । )

शैब्याः– ( सास्रं ) वत्से ! समाश्वसिहि समाश्वसिहि ।

मालवी—हा मूर्छामुपगता किं मे वत्सा। (इति वदंती सा-
विन्नीसमीपमुपसर्तुमिच्छति।)

अश्वपतिः—आर्ये शैव्ये! प्रिये मालवि! इंद्रजालमेतत्।

शैव्यामालव्यौ— प्रेमपरतंत्रतया विस्मृतमेतदावाभ्याम्।

धौम्यः— अयि सुवर्चः!

साविन्नीकृतया मन्ये शिवाः प्रार्थनयानया।
दयार्द्रहृदयात्मास्याः पूरयिष्यति वांछितम्॥ ६८॥

सुवर्चाः— आर्य धौम्य! नैतावदेव-

करुणारसैकशरणं वच एतस्या निशम्य नृपपुत्रम्।
उदयद्दयोदयोमुं न यमोपि भविष्यति क्षमो हंतुम्॥ ६९॥

(ततःप्रविशति यमः)

यमः— (स्वगतं।) दुःसहं हि पतिव्रतानां तेजः।
यत्राहमपि निःशंकं न गंतुं प्रभवाम्यहो।
कौ वराकौ वराहास्यव्याघ्रास्यौ तत्र किंकरौ॥ ७०॥

एकत आबाल्यतो निर्मिता महामृत्युंजयभक्तिरन्यतो वटसावि-
त्रीव्रतचर्याऽपरतो भक्तिभरसंतुष्टस्वांतानां गुरुजनानामाशिष
इतरतश्चाप्रतिममात्मनः पातिव्रत्यमितीयं बलवती किल जाग-
र्ति साविन्याः सहायसंपत्। सत्यं साविन्या अंकलग्नममुं सत्यवं-
तमपहर्तुमिच्छतो मे वेपत इव हृदयं ताम्यंतीवांगानि सीदती-
वांतरात्मा परं क उपायः का गतिर्वा। अनतरानि हि स्वातंत्र्य-
मीश्वरनियोगः सर्वस्य। (निपुणं निर्वर्ण्य।) किमिदानीमेव प-

रिसमाप्य परमेश्वरप्रार्थनां मूर्छामुपगतेयं। भवतु क्षणं प्रतिपालयामि यतोद्याप्यस्ति क्षणत्रयपरिमितं सत्यवतः शेषमायुः। (इति परिक्रामति।)

**द्युमत्सेनः—** सखेऽश्वपते! श्रुतं भगवतो यमदेवस्य वचनम्।

अपि क्षणार्धमात्रं प्राक् पश्चाद्वायुःक्षयक्षणात्।
जंतुं हंतुं नियंतुं वा न क्षमोस्ति यमोप्यहो ॥६०॥

**अश्वपतिः—** आर्य राजर्षे! नन्वेवमेतत्। नियतिनिर्मिता रेखा रेखामात्रमप्यन्यथा कर्तुं कः प्रभवति।

**सावित्री—** (संज्ञामुपलभ्याग्रतो धर्मराजं विलोक्य च सभयं स्वगतं।) हा हंत ममैव मंदभाग्येन नारदप्रोक्त एवायं वासरो नारदप्रोक्तैवेयं वेला नारदप्रोक्त एवायं मुहूर्तश्चोपस्थितस्तदयमिंद्रनीलमणिनीलिमगर्वसर्वंकषवर्णः सायंतनाभ्रवर्णेन वाससा परिवृतो धूर्जटिजटाजूटसनाभिजटाजूटः प्रभाकरप्रभाप्रतिस्पर्धिप्रभाप्रभावो भगवान् भास्करिरेवेति मे तर्कः। भवतु किमिदानीं भयेन। प्रश्नेनैवावगमिष्यामि तत्कृत्यं। (इति विचार्य स्वोत्संगात्सत्यवच्छरीरमधो निधायोत्थाय च सांजलिबंधं प्रकाशं।) देव! भव्येयमाकृतिरेव भगवतो निवेदयति दिव्यत्वं परं भगवान् को देवः किंचिकीर्षुश्चात्रागतोसीति ज्ञातुमिच्छा मे।

**यमः—** (स्वगतं।) सुखग्राह्य इदानीं सत्यवान्। (प्रकाशं।) वत्से! मर्त्यास्माभिः सहामर्त्यो वयं न संवदामस्तथापि गुरुभक्त्या

पातिव्रत्येन तपसा च वक्तुमर्हसीति संवदामि।

क्षीणायुषममुं नेतुं त्वदीयं प्राणवल्लभम्।
वत्से संयमनीनाथं विद्धि मां समुपागतम्॥ ७१॥

सावित्री– (स्वगतं।) हा! प्राप्ता दुःखवर्षिणी वेला। धैर्यस्थैर्यमंतरा नान्यच्छरणमिदानीं मे। (प्रकाशं।) भगवन्! सर्वत्र प्राणिनो नेतुं भवद्दूता एव गच्छंतीति श्रूयते कथमत्र भगवानेवागतः।

यमः– वत्से!

धीधर्मधैर्यशौर्यादिगुणरत्नाकरस्त्वयम्।
न दूतनेय इत्येवं ज्ञात्वैवाहमुपागतः॥ ७२॥

सावित्री– देव। दयालुरसीति सप्रणयं सार्जवं सांजलिबंधं चैतत्प्रार्थ्यसे।

प्राणान् प्राणप्रियप्राणत्राणायामून् ददामि मे।
प्रतियच्छ मम प्राणैस्तत्प्राणानिति मेऽर्थना॥ ७३॥
नय मामेव देव त्वां यम संयमनीं पुरीम्।
परं मे प्राणसर्वस्वं मुंचामुमिति मेऽर्थना॥ ७४॥

वीरवर्यमतिधीरशेखरं
घर्मघूर्वहमिलाविलासिनम्।
तं विहाय नय मां यमांतक
व्यालवक्रमियमेव मेऽर्थना॥ ७५॥

यमः– वत्से! परेश्वरप्रबद्धतंत्रपरतंत्रस्य मे नैवं कर्तुं शक्तिः।

**सावित्री**— प्राणवल्लभममुं विहाय मे
मां न नेतुमसि शक्तिमान् यदि ।
तर्हि तेन सह नेतुमुत्वरं
कर्तुमर्हसि दयां दयांबुधे ॥ ७६ ॥

**यमः**— वत्से ! नैवमपि कर्तुमायुषः शेषे वयं प्रभवः । ( इत्युक्त्वा सत्यवच्छरीरादंगुष्ठमात्रं पुरुषमाकृष्य पाशेन बध्वा च दक्षिणां दिशं प्रतिनयति । )

**मालवी**— प्राणनाथ ! एप एव खलु मे स्वप्नः । हा वत्स सत्यवन् ! हा वत्से सावित्रि ! युवयोरपीदृशो दशाविपर्यासः । ( इति वदंती मूर्छामुपगच्छति । )

**अश्वपतिः**— हा किमेतदापतितं । धिग्दुर्दशां मम । ( इति मूर्छया पतति । )

**शैब्याद्युमत्सेनौ**— हा परिसमाप्तं जीवितप्रयोजनं । ( इति विलपंतौ मूर्छया पततः । )

**भरद्वाजः**— आर्य गौतम गौतम ! विपरीतमिदमुपपन्नमिंद्रजालविलोकनफलं । किमतःपरं करिष्यामः ।

**गौतमः**— भगवन् भरद्वाज ! न किंचिच्चिंतास्थलमेतद्वीजयन्त्वस्मच्छात्रा जलार्द्रपवनैरेतान् ।

**छात्राः**— यथाज्ञा गुरुवराणां । ( इति वीजयंति । )

**सर्वेपि**— ( क्षणात्संज्ञामुपलभ्य । ) अहो अस्मदर्थं बहुलः श्रमः स्वीकृतः श्रीमद्भिः ।

**गौतमः**— क इवायं श्रमः ।

सावित्री– हा प्राणनाथ! हा हृदयदयित! क्व मामेकाकिनीं विजने घने वनेऽस्मिन् विमुच्य प्रयासि। कथमेकपद एव विस्मृता प्रीतिः। कथं न मातरं कथं न पितरं वा स्मरसि। कोऽपरो विना भवंतं वृद्धयोरंधयोश्च तयोः परिचर्यां करिष्यति। हा कथं देवव्रतप्रज्ञावतोरपि पवित्रां मैत्रीं विस्मरसि। क्षणं प्रतिपालय मामियमागच्छामि।

द्युमत्सेनः– इंद्रजालमिदमस्ति न किंचि-
द्वस्तु वास्तवमिति क्षितिदेवाः।
विद्म एव हि तथाप्यनया न
स्ताम्यतीह हृदयं करुणोक्त्या ॥ ६१ ॥

भरद्वाजः– राजन्! सर्वं शुभोदर्कं भविष्यति भवतां सद्भाग्येन तद्धैर्यमवलंब्यतां।

यमः– (स्वगतं।) हृदयभेदिनो हीमे विलापाः। (प्रकाशं।)

वत्से सावित्रि यत्सत्या पत्यावुपरते स्त्रिया।
कृत्यं त्वया कृतं तत्तन्निवर्तस्वाश्रमंप्रति ॥ ७७ ॥

सावित्री–प्राणप्रियं मम नयिष्यसि यत्र यत्र
गंतव्यमेव हि मयापि च तत्र तत्र।
धर्मं सनातनमिमं मम संविदंती
हेधर्मराज न कथं तमनुप्रयाणि ॥ ७८ ॥

गुरुभक्त्या पतिप्रेम्णा तपसा व्रतचर्यया।
अपि युष्मत्प्रसादान्मे सर्वत्राविहता गतिः ॥ ७९ ॥

किंच– सख्यं सतां साप्तपदीनमुक्तं
सद्भिस्तदुत्पन्नमिदं भवद्भिः ।
संप्रार्थये तत्करुणासुधाब्धे
यत्तत्क्षणं श्रोष्यासि दीनबंधो ॥ ८० ॥

यमः– गच्छन् श्रोष्यामि ते वत्से वचोऽमृतरसोपमम् ।
कालातिक्रमभीः स्थातुं क्षमस्व न क्षमः क्षणम् ॥८१॥

सावित्री–भगवन्नेतदपि बहु ।

यमः– वत्से तर्हि वद वक्तव्यं ।

सावित्री– देव ! नाजितेंद्रियाणां धर्मः फलति नाजितेंद्रियाणामर्थः सार्थतामुपयाति नाजितेंद्रियाणां कामोभिरामो भवति नाजितेंद्रियाणां मोक्षलक्ष्मीः स्वप्नेऽपि दृष्टिपथातिथितामुपयाति नाजितेंद्रियाणां ध्यानं फलति नाजितेंद्रियाणां योगश्च फलति नाजितेंद्रियैर्वर्णधर्मः परिपाल्यते नाजितेंद्रियैराश्रमधर्मः परिपाल्यते नाजितेंद्रियैः कुलधर्मो वा परिपाल्यते इति केषामविदितं । सद्धर्मसाध्या अर्थाः सद्धर्मसाध्याः कामाः सद्धर्मसाध्याः सिद्धयः सद्धर्मसाध्या बुद्धयः सद्धर्मसाध्याः श्रेयःसंपदः सद्धर्मसाध्या विजयाः सद्धर्मसाध्या अभ्युदयाश्चेति निर्विवादं । सद्धर्मश्च सर्वोप्युर्वीवलये जितेंद्रियचयसाध्य इंद्रियचयवैरिविजयस्तु गृहाश्रमदुर्गाश्रयसाध्य एवेति जगत्प्रसिद्धं ।

गृहाश्रममिमं तं मेऽपहृत्य प्राणवल्लभम् ।
हा हंत हंसि किं न्वेतद्धर्मराज तवोचितम् ॥ ८२ ॥

यमः-(स्वगतं।) दिष्ट्या सेयं रोषदृष्ट्या भस्मसात्कुरुते न माम्।
किं किं पतिव्रताः कर्तुं न क्षमा नु क्षमातले ॥ ८३ ॥
(प्रकाशं।) वत्से प्रतिनिवर्तस्व तुष्टस्ते वचनैरहम् ।
वरं वृणीष्व तद्भद्रे सत्यवज्जीवनं विना ॥ ८४ ॥
सावित्री-(स्वगतं।) अवश्यं मोचनीयोऽयं यमपाशान्मम प्रियः ।
परं गुरुजनश्रेयः प्रथमं प्रार्थ्यमेव मे ॥ ८५ ॥
(प्रकाशं।) प्रणष्टनेत्रौ मे श्वश्रूश्वशुरौ त्वत्प्रसादतः ।
संप्राप्तनेत्रौ भवतामेषा मे प्रथमार्थना ॥ ८६ ॥
यमः- (स्वगतं।) अलौकिकी वत्साया गुरुजनेषु भक्तिः ।
(प्रकाशं।) अस्तु ते प्रस्तुतेऽज्ञातिभद्रे भद्रेण कर्मणा ।
गच्छाश्रमं श्रमं नैनं सहिष्यति वपुस्तव ॥ ८७ ॥
द्युमत्सेनः-वत्से ! युवयोरभावे क उपयोगो नेत्रयोर्नः ।
शैब्या-आर्यपुत्र ! मन्ये सावित्रीप्रार्थनयैवाधिगता दृष्टिरावाभ्यां ।
द्युमत्सेनः- एवमेतत्। दिष्ट्या सावित्रीकृत उपकार इंद्रजालेन निवेदितः । यतः-
उपकृत्य मौनमेवावलंबने सा निसर्गतः सततम् ।
परगुणमणुप्रमाणं प्रकाशयत्येव वत्सा मे ॥ ८८ ॥
सावित्री- दयार्द्रे हृदयाधीशं यत्र यत्र नयिष्यसि ।
तत्र तत्रागमिष्यामि कोऽयं हंत मम श्रमः ॥ ८९ ॥
परं किमपि श्रूयतां ।
यमः-अवमपारिनोस्मि श्रोतुं ।

सावित्री– सतां सकृत्प्रसंगोपि चिंतामणिगणायते ।
तस्मात्सर्वोपि सत्संगमभंगमभिकांक्षति ॥ ९० ॥

यमः– वत्से सत्सेवनगुणोद्धर्णनेनामुनाधुना ।
तुष्टोस्मि तद्वरं ब्रूहि सत्यवज्जीवनं विना ॥ ९१ ॥

सावित्री– प्राज्यं राज्यं निजं राजाधिराजः श्वशुरस्तु मे ।
प्राप्नुयात्पुनरित्येषा द्वितीया प्रार्थना मम ॥ ९२ ॥

यमः– तथास्तु वत्सेऽधीशस्त्वं स्वपुरः श्वशुरस्तव ।
पुनः प्राप्स्यति धर्मात्मा पुत्रि मा श्रममाश्रय ॥ ९३ ॥

सावित्री– अद्रोहः सर्वभूतेषु मनोवाक्कायकर्मभिः ।
दानं दया च देवेश सतां धर्मः स्वभावजः ॥ ९४ ॥
अपि द्विषत्सु सततं संतो येनुग्रहावहाः ।
त्वादृशा मादृशे दीने जने किं न दयामयाः ॥९५॥

यमः– वरं वृणीष्व वत्से त्वं तृतीयमपि सुव्रते ।
दास्याम्यभीप्सितं सर्वं सत्यवज्जीवनं विना ॥ ९६ ॥

सावित्री– अपुत्रो मत्पिता पुत्रशतसौख्यमवाप्नुयात् ।
वंशश्च वर्धतामेषा तृतीया प्रार्थना मम ॥ ९७ ॥

यमः– पुत्रि पुत्रा भविष्यंति पितुस्ते मालवाव्हयाः ।
शतसंख्या निवर्तस्व श्रमस्ते मास्तु दुःखदः ॥ ९८ ॥

सावित्री– प्रज्वलज्ज्वलनज्वालामाला मलयजायते ।
प्राणेशानुगतौ यर्हि तर्ह्ययं को मम श्रमः ॥ ९९ ॥
स्मरणमपि यदंघ्रेः सर्वसंपत्तिमूलं
प्रणतैरखिलपापोच्चापशांत्यौषधिश्च ।

तपनतनय तं त्वां वीक्ष्य साक्षादिदानी-
महमसुखमुपैमीत्यस्ति युक्तं किमेतत् ॥ १०० ॥

यमः– वरं वृणीष्व वत्से त्वं चतुर्थमपि सत्वरम् ।
दास्यामि दुर्लभतमं सत्यवज्जीवनं विना ॥१०१॥

सावित्री– तनयाः सनयाः संतु शतं सत्यवतो मयि ।
औरसा धर्मरुचयश्चतुर्थेयं ममार्थना ॥ १०२ ॥

यमः– अतिदूरमुपागतास्यहो विनिवर्तस्व सुते शतं सुताः ।
त्वयि सत्यवतोतिपौरुषा भवितारोत्र विशंकमौरसाः १०३

सावित्री– आकल्पस्थायिनां मूलं कल्याणकल्पशाखिनाम् ।
वज्रं कुशीलशैलानां संत इत्यक्षरद्वयम् ॥ १०४ ॥

द्युमत्सेनः– सखे ! यथाह वत्सा ।

अश्वपतिः– अथ किम् ।

सावित्री– चिंतामणिः सचिंतानां चंद्रकांतः कृतांत हे ।
हंत संतापतप्तानां संत इत्यक्षरद्वयम् ॥ १०५ ॥

शैव्या– सखि मालवि ! रमणीयं भणति वत्सा !

मालवी– नन्वेवमेतत् ।

सावित्री– भानुभानुसहस्रेणाप्यभेद्यं हृद्गुहागतम् ।
ध्वांतं भिनत्ति सत्संगरविस्तु रविनंदन ॥ १०६ ॥
अचंद्रातपसंछेद्यान् हिमाद्रिमहिमच्छिदः ।
तापान् सपापान् हंत्युग्रान् साधुसंगसुधाकरः ॥१०७॥

यमः– ( स्वगतं । ) सावित्र्या एकैकमप्यक्षरं प्रीणयत्यंतःकर-
णं मे ।

**सावित्री**— सत्संगतिसुधासिंधुनिमग्नमनसां मनः ।
अधर्मधर्मजाः क्लेशा धर्मराज स्पृशंति किम् ॥१०८॥
अचंचला अमलिनाः सद्बोधामृतवर्षिणः ।
जगत्सज्जनजीमूता ह्लादयंति विगर्जिताः ॥१०९॥
अमुना यमुनाभ्रातः सत्संगमणिना विना ।
को न लोके निरालोके नरोपि वानरोपमः ॥ ११० ॥
दयार्द्रहृद्भिः सौहार्दवद्भिः सद्भिर्विनिर्मितः ।
अर्धक्षणप्रसंगोऽपि कोऽपि कल्पद्रुमायते ॥ १११ ॥
अदूषणैः सत्पुरुषरत्नैर्विश्वविभूषणैः ।
धात्री च भूतधात्री च रत्नगर्भेति मे मतिः ॥ ११२ ॥
ईदृशासंख्यसुगुणरत्नरत्नाकरा नराः ।
संतो गांभीर्यवंतोऽमी जगज्जीवातवः स्मृताः ॥११३॥

**यमः**— सुधाकिरं गिरं श्रुत्वा भक्तिर्मे त्वयि वर्धते ।
वृणीष्व तद्यथाकामं वत्सेवरमनुत्तमम् ॥ ११४ ॥

**सावित्री**— मयि मे हृदयेश्वरात्सुता
भवितारः शतमौरसा इति ।
वरमत्र समर्प्य नीयते
दयितोऽयं रविपुत्र कुत्र मे ॥ ११५ ॥

**द्युमत्सेनादयः**— ( सहर्षं । )
धन्यासि पुत्रि धन्यासि धन्या ते मतिरीदृशी ।

**मुनयः**— ( सानंदं । )
वृत्तिः सत्कुलकांतानामीदृश्येव हि शोभते ॥६२॥

सावित्री—हृदयं हृदयप्रियं विना मम नेदं यमदेव सस्पृहम्।
पुरुषार्थचतुष्टयप्रदे निखिलानंदपदेपि जीविते ॥ ११६ ॥
न विना हृदयेश्वरं धृतिर्न विना मे हृदयेश्वरं मतिः।
न विना हृदयेश्वरं गतिर्मम सर्वस्वमयं हृदीश्वरः ॥११७॥
न धनं न धरा न धाम वा न च राज्यं न सुखानि संपदः।
सुहृदो न न बंधवोपि वा मम सौख्याय विना हृदीश्वरम् ११८
सुरशाखिलताशतावृतं मणिमन्मंदिरमामरं पदम्।
अपि पामरवाससन्निभं हृदये मे हृदयेश्वरं विना ॥११९॥
सुरराजसखस्य मे पितुः सुरलोकाधिकवैभवान्यहो।
भवनानि वनोपमानि हा हृदये मे हृदयेश्वरं विना॥१२०॥
तदमुं मम मुंच सत्वरं भगवन् संप्रति जीवितेश्वरम्।
भव जीवितदानदो हि मे करुणातः करुणासुधानिधे १२१

यमः— पुत्रि सावित्रि पावित्र्यं पातिव्रत्यं च वीक्ष्य ते।
मया दयावशेनायं मुक्तस्ते प्राणवल्लभः ॥ १२२ ॥
गतायुषाप्यनेनाद्य चतुर्वर्षशतायुषा।
वत्से सत्यवता भाव्यं पातिव्रत्यप्रतापतः ॥ १२३ ॥
भविष्यंति शतं पुत्राः कुत्राप्यप्राप्तभीलवाः।
सावित्रा इति ते नाम्ना ख्यातिं यास्यंति तेऽखिलाः १२४
(इत्युक्त्वांगुष्ठमात्रं पुरुषं पाशतो मुंचति।)

द्युमत्सेनः— हंतेदानीं पुनरुज्जीविता वयं वत्सायाः पातिव्रत्येन।

अश्वपतिः— अद्य सफलं जीवितं नः।

**शैव्यामालव्यौ**— वत्सया वयं सर्वेप्यद्य यमपाशान्मोचिता न केवलं वत्सः सत्यवान् ।

**सावित्री**— ( सहर्षास्रं । ) भगवन् ! महानयमनुग्रहः । ( इति प्रणमति । )

**यमः**— वत्से ! कल्याणपरंपरामनुभूयाः । (इत्युक्त्वांतर्हितो भवति।)

**सावित्री**— ( स्वगतं । ) अंतर्हितो दयामयाशयो भगवान् भास्करिस्तदहमविलंबेन मे प्राणनाथसमीपमुपैमि । बहुयोजनांतरितं हीतस्तद्वनं । ( इति निष्क्रांता । )

( ततः प्रविशति तरुतलसुप्तः सद्यः प्राप्तजीवितः सत्यवान् । )

**सत्यवान्**— ( अनुन्मीलितलोचन एव । ) प्रिये प्रिये सावित्रि ! बहु सुप्तं मया । कथमद्यावधि न प्रतिबोधितोत्र भवत्या भवत्या । कथं न किमपि प्रतिब्रूपे । सोऽयं महाननर्थ आपतितो यदावाभ्यां नाद्याप्याश्रमं प्रति निवृत्तम् ।

**शैव्या**— सखि मालवि ! वत्सस्यांतःकरणं त्वेतद्विषय एव विलीनं नान्यत्किमपि वेत्ति ।

**मालवी**— आर्ये ! नन्वेवमिदं ।

**सत्यवान्**— प्रिये पानीयमानीय वाप्या अर्पय मे द्रुतम् ।
लोचने क्षालयाम्येते येन निद्राभरालसे ॥ १२५ ॥

(सैकतराशिमयमुपधानं पाणिनोपस्पृश्य सभयं नेत्रे उन्मील्य च स्वगतं । ) हा किमेतदाश्चर्यं ।

यदा शिरसि वेदना किल ममाभवद्दुःसहा

निधाय तु तदा शिरः प्रियतमांकपाल्यामहम् ।
प्रसुप्त इति वेद्म्यहो कथमिहाद्य सा मे प्रिया
न हा हरिणलोचना सुखयति स्म मे लोचने ॥ १२६ ॥

(आकाशाभिमुखमवलोक्य ।) अहो निशीथप्राया निशीथिनी। हा नियतिरोपविलसितमेतत् कथमितरथा बाल्यत एवाग्रःहानभिज्ञायाः प्रियाया मे वनागमनाग्रहग्रहग्रस्तता कथं पित्रोस्तदनुमोदनं कथं च तया सहागतस्यापि ममेयान् प्रमादः संभवेत् । ( उत्थातुमिच्छन् । ) हा शक्तिरपि मे किं सहैव सा-विद्र्या गता । यत उत्थातुमिच्छतोपि भ्रमति शिर आंध्यमुपगच्छति दृष्टिः परिकंपते कायश्च यन्नभवेत्तन्यूनं ।

**शैव्या–** सखि मालवि ! अनभिज्ञः खलु वत्सो धर्मराजागमनवृत्तांतस्य ।

**मालवी–** आर्ये ! यथाह भगवती ।

**सत्यवान्–** अथवा स्वप्न एवायं मे। न कदाचित्समाणा प्राणप्रिया निद्रितं मां विहाय पदात्पदमपि चलेत् । ( शनैरुत्थाय परितोवलोक्य च स्वगतं।) नायं स्वप्नो।निःशंकं जागर्म्यहं परं न केनापि प्रकारेण प्रियाया इतो गमनं संभवति । ( क्षणं विचार्य । )

निद्रापरवशं श्रांतं शिरसो व्यथयातुरम्।
वीक्ष्य मां तत्समाख्यातुं गता मन्ये तमाश्रमम् ॥१२७॥

यत उक्तं तदार्योभ्यामासायं यर्हि नेष्यथः ।
गंतारस्तर्हि नौ प्राणा इति ज्ञेयमसंशयम् ॥ १२८ ॥

अथवा कोऽयं मृषा वितर्कः। प्रकृतिकोमला सा निर्जनेस्मिन् घने वने किमेकाकिनी पदात्पदमपि चलितुं शक्नुयात्। सत्यमिदानीमेव यो मया दुःस्वप्नो विलोकितस्तस्यैवायं परिणामः।

**मालवी**– आर्ये! यमागमनवृत्तांतमेव वत्सो दुःस्वप्नं वेत्तीति मे तर्कः।

**शैब्या**– ममाप्ययमेव तर्कः।

**सत्यवान्**– ( धनुर्विलोक्य दीर्घमुष्णं च निःश्वस्य सास्रं। )

प्राणप्रियारक्षणार्थं धृतस्ताताज्ञया मया।
चापो मे पापयोगाद्धा तत्सर्वं निष्फलं गतम् ॥१२९॥

( ईश्वरंमति स्वगतं। )

मृत्युंजय जयापर्णाप्राणप्रिय जगत्पितः।
प्राणप्रिया यत्र सा मे गता तत्राभिरक्ष ताम्॥१३०॥

**द्युमत्सेनः**– वत्स! मृत्युंजयदयावलोकलवबला एव वयं खलु।

**अश्वपतिः**– आर्य राजर्षे! इंद्रजालमेतत्।

**सत्यवान्**– ( स्वगतं। ) विलोकयामि तावत्सर्वेषु वननिकुंजेषु। ( इति परितः परिक्रम्य मालतीलतां माधवीलतां च विलोक्य। )

अयि मालति माधवि प्रिया मम सा वां प्रसवोच्चयप्रिया।
क गता वदतं यदीक्षिता भवतीभ्यामिह निर्जने वने१३१

( आम्रकुंजं विलोक्य सप्रत्याशं। )

रसालकुंज भगवन् गुंजन्मधुकराकर ।
किं मे विलोकिता प्राणप्रिया त्वन्मंजरीप्रिया ॥ १३२ ॥
( अन्यतश्चंपकं विलोक्य सास्रं । )
अयि चंपक परिचर्या मया यथाशक्ति या रचिता ।
तां वीक्ष्य मे प्रियायाः कथयिष्यसि मित्र वृत्तांतम् १३३
( इतरतः सहकारशाखावलंबितां बकुलवल्लरीं विलोक्य सबाष्पं । )
तस्याः प्रवृत्तिं वद मे बाले बकुलवल्लरि ।
ययास्य सहकारस्य त्वं कृता सहचारिणी ॥ १३४ ॥
अपीदृशोपकारं किं विस्मरेस्त्वादृशी क्वचित् ।
नैतन्मृषाथवा वाक्यं सर्वः स्वार्थमपेक्षते ॥ १३५ ॥
( अपरतोऽशोकं विलोक्य । )
सर्वः कुलीनः स्वसमान् कुरुते स्वाश्रितान् नरान् ।
अशोकं कुरु माऽशोकमचिरात्ते चिराश्रितम् ॥ १३६ ॥
( चंद्राभिमुखमवलोक्य । )
हे रोहिणीरमण हे भगवन् सुधांशो ।
सर्वज्ञ आत्मशिरसापि बिभर्ति यत्त्वाम् ।
सर्वज्ञमीश्वरमुपास्य ततोवगत्य
प्राणप्रियाकुशलमत्र ममाभिधेहि ॥ १३७ ॥
( हा ममैवायं प्रमादः । )
उपकृतमनुवेलं येभ्य एभ्यो द्रुमेभ्यः
प्रतिवचनमपीमे यर्हि ते नार्पयंति ।

य इह वदनभासा निर्जितस्तर्हि तस्याः
कथमिव कथयेन्नस्तत्प्रवृत्तिं स चंद्रः ॥ १३८ ॥

( सर्वान्वनतरून् परितो विलोक्य सांजलिबंधं । )

आयि वनतरवः परोपकार-
प्रणयिन आम्रकदंबचंपकाद्याः ।
प्रणतिततिरियं कृता भवद्भ्यः
कथयतु कोपि मम प्रियाप्रवृत्तिम् ॥ १३९ ॥

( इति वदन् कुंजांतरं प्रविशति । )

( ततः प्रविशति सावित्री । )

**सावित्री**– *( ससंभ्रमं सर्वतः परिक्रम्य । )*

प्राणनाथ प्राणनाथ प्राणसर्वस्व मे प्रभो ।
क्वासि क्वासि प्रिय क्वासि दास्यै मे देहि दर्शनम् १४०

**शैव्या**– वत्सेऽधुनैव स इहासीत् ।

**मालवी**– वत्स यां त्वं मृगयसे सेयं मृगविलोचना ।
वत्सास्तु युवयोः सद्यः संगमो हृदयंगमः ॥ ६३॥

**अश्वपतिः**– भगवति शैव्ये ! प्रिये मालवि ! इंद्रजाल-
मेतत् ।

**शैव्यामालव्यौ**– ( लज्जावनम्रे तिष्ठतः । )

**सावित्री**– हा भगवन् धर्मराज ! किं भगवतैवाहं वंचिता यन्म-
दग्रे मे प्राणप्रियं संमुच्येतस्तद्देहोप्यपहृतः । ( स्वगतं । ) नै-
तत्कदाचिद्भगवति धर्मराजे संभवेत् । मन्ये संभ्रमादन्यदेव वनमु-
पगतास्मि । ( इति परितोवलोक्य ( प्रकाशं । )

असंशयं तद्वनमेतदेव प्रियस्य यन्मे परशुस्त्विहायम् ।
तद्विप्रयोगार्तिविनष्टतेजा इवास्तशोभः पतितः पृथिव्याम् १४१

( परशुं प्रति । )

परशो परशो कथं नु तद्भुजविश्लेषविपत्तिमाश्रितः ।
अथवा भवतापि किं दशाधिगता हंत मयेव दुःखदा १४२

( अन्यतो धनुर्विलोक्य सस्नेहं । )

धनुरनुपममित्रं मित्रधर्मैकमूर्त्तेः
क्षितिपतिकुलरत्नस्यासि मे प्राणबंधोः ।
शुभगुणमतिनम्रं हंत सद्वंशजातं
कथमिव वनमध्ये त्वां स तत्याज धीरः ॥१४३॥

( स्वगतं । ) कथं नेदं किमपि प्रत्युत्तरं प्रयच्छति ।

( प्रकाशं । )

भ्रातर्भूत्वापि गुणिनामग्रे गण्यं महीतले ।
दीनेप्यस्मिन् जने मौनं धत्से किं तत्तवोचितम् ॥१४४॥

( स्वगतं । ) नैतन्मत्प्राणप्रियप्रियमित्रे संभवति । ( पुनः सवितर्कं प्रकाशं । )

अथवा हृदयेश्वरस्य मे विरहोऽव्यथयासि मूर्छितम् ।
शुभवंशसमुद्भवे गुणिन्युचितं तन्वयि हे धनुर्ननु ॥ १४५ ॥

तदेहि वीजयामि त्वां । ( इत्युक्त्वांके निधाय चैलांचलेन वीजयति । )

( ततः फलपूर्णं पात्रं विलोक्य )

भ्रातर्यातः क्व मे प्राणप्रियः कठिन कथ्यताम् ।
सुवृत्तानां सुवंश्यानां करुणैव हि भूषणम् ॥ १४६ ॥

हा कथं नैतदपि किमपि वक्ति ।

अथवा धिक् प्रमादो मे यथानामगुणं जगत् ।
हंत सद्वंशजातेपि कठिने करुणा कुतः ॥ १४७ ॥

भवतु स्वयमेवाहं सर्वत्रार्यपुत्रमन्वेषयिष्यामि । ( इत्युत्थातुमिच्छंती । ) हा हंत प्राणनाथेन सहैवोत्साहोपि मे प्रणष्टः किम् । तदानीं धर्मराजेन नीयमानमार्यपुत्रमनुगच्छंत्या मे व्योममार्गेप्यप्रतिहता गतिरासीदिदानीं विना प्राणनाथं पृथ्व्यामपि पदात्पदमपि चलितुं नेमौ प्रभवतः पादौ मे । हा प्राणनाथ ! हा जीवितवल्लभ ! हा दयामृतमयाशय ! निर्जने घने वनेऽस्मिन्मामेकाकिनीं विमुच्य क्व विलीनोसि देहि मे दर्शनं ।

प्रातस्त्वया सहागंतुं मयाकारि महाग्रहः ।
रुष्टोसि तेन चेदेनं मंतुं क्षंतुं त्वमर्हसि ॥ १४८ ॥

( निपुणं निर्वर्ण्य । )

वटविटपितले विभाति किंचि-
द्भुवमचलावलयेद्दुरेप एव ।

( इति वटतरुतलमुपसृत्य । )

हरि हरि तरुणापि वंचिताहं
बत पुरुषाकृतिमत्प्रकांडभाजा ॥ १४९ ॥

( इत्यश्रूणि मुंचति । )

शैब्या–मालवि! इंद्रजालमेतदिति जानंत्या अपि मे सावि-
त्र्या वचनश्रवणेन भिद्यते हृदयमंधीभवति चक्षुर्म्लानिमु-
पगच्छति चांतरात्मा।
मालवी– आर्ये! यथा वदसि तथैव सर्वं ममापि भवति।
अश्वपतिः–आर्य राजर्षे! भगवतो गौतमस्येयं विद्या परी-
क्षानिकषोपलशिला खलु धीराणामपि धीरत्वस्य।
द्युमत्सेनः– प्रिय मित्रमणे! नन्वेवमेतत्।
सावित्री– हा कोऽयं विधातुः कोपो येन प्रार्थनासहस्रश्रवणसं-
तुष्टेन भगवता धर्मराजेन पाशान्मुक्तोपि प्राणनाथो मे न जाने
क्कांतर्हितः। ( परितः परिक्रम्य तरुपंक्तिं प्रति। )

अये शालास्ताला अयि वररसालाः प्रियतमा-
स्तमाला युष्मभ्यं प्रणतिनिचयोऽयं विरचितः।
भवद्भ्यः स्वस्ति स्ताद्वदत परतापोपशमनाः
कृपापाथोनाथो मम हृदयनाथः क्क नु गतः॥ १९०॥

( रसालकुंजं विलोक्य। )

अयि बालरसालकुंज भद्रं
भवतात्ते भगवत्कृपावलोकात्।
यदि वेत्सि वद क्क मे प्रयातः
प्रणयी प्राणपतिः कृती कृतज्ञः॥ १९१॥

( पुनः परितः परिक्रम्य स्वगतं। )

आम्राशोककदंबचंपकवनान्यालोकितान्यादरा-
द्दृष्टास्तालतमालशालसरलच्छायाश्च रम्याश्रयाः।

भ्रामंभ्राममभीक्षिता गिरिसरित्तीरे निकुंजाः परं
हाहा हंत न लोचनातिथिरभूत्प्राणप्रियः क्वापि मे॥१९२॥

( प्रकाशं सबाष्पकंठं । )

हृदयं हृदयप्रियाधुना मम पापं त्वयि यद्विशंकते ।
तदिदं यदि सर्वथा तथाऽपतितं तर्हि मृतिर्हि मे गतिः १९३

परमद्य सुधाकिरां गिरां
ततयः किं गतयो दयोदधे ।
प्रणयश्च नयः किमाश्रयो
भविता को विजयश्रियः प्रियः ॥ १९४ ॥

**द्युमत्सेनः**– ( स्वगतं । ) हा दुःसहा एता गिरः ।

**सावित्री**– विहता बत सा कृतज्ञता
गुणवत्ता च गुणज्ञता हता ।
असति त्वयि मद्दशावशात्
करुणा साऽशरणाजनि प्रभो ॥ १९५ ॥

**अश्वपतिः**– ( स्वगतं सास्रं ) मास्तु तादृशं दुर्दिनं ते । )

**सावित्री**– अयि सत्य न सत्यमद्य ते शरणं धैर्यमुपेहि धैर्य हे ।
असतीह तु सत्यवत्यहो क्व वदान्यत्र वदान्य ते वसेः १९६

**मालवी**– ( स्वगतं । ) वत्से ! मा स्वप्नेपि तवेदृशी दशा भवतु ।

**सावित्री**– गुरुभक्तिरुपागता मृतिं
परिशुष्को बत शौर्यसागरः ।

असति त्वयि मंदभाग्यतो
मम शून्यं सचराचरं जगत् ॥ १५७ ॥

शैब्या– ( स्वगतं । ) वत्से ! हंत तेऽमंगलानि सर्वमंगला-
हृदयवल्लभः ।

सावित्री– पितरौ तव तावुभौ विभो
मम चापि प्रणयामृतोदधे ।
न भविष्यत एव ह्यभव-
द्विरहव्याधिविलुप्तजीवितौ ॥ १५८ ॥

द्युमत्सेनादयः– ( सर्वेपि स्वगतं । ) वत्से । एते वज्रहृद-
या वयं जीवामः ।

सावित्री– अवितर्क्यंतमायुषोबला-
दभवा संत्वखिलाः सजीविताः ।
अयि नाथ तथापि दुःखितान्
कथमेतान् प्रभवामि वीक्षितुम् ॥ १५९ ॥

द्युमत्सेनः– ( स्वगतं । ) सत्यमेतत् ।

सावित्री– शरणं मरणं तदद्य मे
मरणस्य स्मरणं विधाय ते ।
शिवसद्मनि संगमो हि नौ
भविता शंभुदयाद्दशा पुनः ॥ १६० ॥

परमप्रनिमप्रियैषिणी
श्वशुरौ मे पितरौ च तावुभौ ।

कनु हंत पुनर्दयामयौ
प्रिय द्रक्ष्याव उदारमानसौ ॥ १६१ ॥

मनुजेषु जनुः पुनर्भवे-
द्यदि दैवात्प्रमदासु मे तदा ।
पितरौ श्वशुरौ च याविमौ
शिव तावेव पुनः समाप्नुयाम् ॥ १६२ ॥

चरमा परमार्थनेति मे
हृदि धार्या भगवन् दयोदधे ।
इयमंघ्रिसरोजसेविनी
भवदीया मृतिमेति सांप्रतम् ॥ १६३ ॥

हा मातर्मालवि ! हा पितरश्वपते ! हा आर्यश्वशुरचरणाः ! हा आर्यश्वश्रूचरणाः ! एष मे मंदभाग्यायाः पापायाः सावित्र्याश्चरमः प्रणामपुष्पांजलिः । ( इति विलपंती मूर्छां नाटयति । )

**शैब्याद्युमत्सेनौ**– ( सबाष्पं )

शिव शिव शिव मूर्छामेति वत्सातिदुःखा-
त्कठिनहृदयव्रचीन् धिग्धिगस्मान् सजीवान् ।

( इति मूर्छामुपगच्छतः । )

**मालव्यश्वपती**– ( सबाष्पं )

अलमलमलमस्मादिंद्रजालान्महर्षे !
विरम विरम नैवातःपरं द्रष्टुमीशाः ॥ ६४ ॥

( इति मूर्छापरवशौ पततः। )

गौतमः-(शीतोपचारैः सर्वान् मासंज्ञान् विधाय। ) आर्य राजर्षे ! वत्स अश्वपते ! संस्मृत्येंद्रजालविलोकनारंभ-विरचितां स्वां प्रतिज्ञां धैर्यमालंब्यतां।

अश्वपतिद्युमत्सेनौ- भगवन् ! क्षम्यतां। सांप्रतमवहिताः स्मः।

सावित्री- ( संज्ञामुपलभ्य सवितर्कं। )

घिग्जिह्वे किमिदं ब्रवीपि भगवांश्चंद्रार्धचूडामणिः
संतुष्टोस्ति ययोरनन्यपरया भक्त्यात्मभक्तार्तिहा।
पुत्रे हंत तयोरयं भगवतोः शैव्याद्युमत्सेनयोः
कालः किंचिदपि प्रभुः किमहितं कर्तुं मदीये प्रिये॥१६४॥

किंच। या मयाराधि सावित्री साऽवित्री किं न सांप्रतम्।
भवित्री मे प्रियस्यास्य सवित्री श्रेयसां स्वयम् ॥१६५॥

( इति सोत्साहमुत्थाय परितोऽवलोक्य च। )

हे नीतिवल्लभ विना नहि नीतिकांता-
मन्यासु ते हृदयमेति कदाचिदेव।
स त्वं प्रियान्यवनिताहृतचित्तवृत्तिः
कुत्रापि यात इति हंत कथं वदामि ॥ १६६ ॥

( इति विलपंत्यन्यकुंजं प्रविशति। )

( ततः प्रविशत्यश्वारूढो नीतिवल्लभः। )

नीतिवल्लभः- ( स्वगतं। ) महावेगोयमश्वः सूर्यास्तसमयानंतर-मेव शाल्वेभ्यः प्रस्थितोहं तन्मन्ये महाराजेन द्युमत्सेनेनाधि-

ष्ठितस्य वनस्य परिसरभूमिमभ्यागतोस्मीति । अहो ! अधुना काचित्—

हे नीतिवल्लभ विना न हि नीतिकांता-
मन्याशु ते हृदयमेति कदाचिदेव ।

इत्युक्त्वा कुंजादस्माद्विनिर्गता । मन्ये कयाचिद्वनदेवतया देवकन्यया वा भाव्यं तया । न मानुषीणां तादृशी विद्युदुज्ज्वला प्रभा भवितुमर्हा । भवतु वा या काचित् किं मे ज्ञातयाऽज्ञातया वा तया प्रयोजनं । अथवा हेनीतिवल्लभेत्यादि मामुद्दिश्य तया प्रोक्तं चेन्मदभिज्ञा सेत्यनुमीयते । घुणाक्षरन्यायोपि कदाचिदेवं फलति वा । यदस्तु तदस्तु । महाराजद्युमत्सेनस्याश्रम एव मया त्वरया गंतव्यः । ( इति परिक्रामति । )

द्युमत्सेनः—(साश्चर्यानंदं । ) प्रियसखे नीतिवल्लभ नीतिवल्लभ ! चिरात्पल्लवितमगण्यपुण्यपारिजातपरंपराभिर्यदद्य पश्यामि मित्ररत्नं त्वां । ( इत्यश्रूणि मुंचन्नालिंगनायोत्थातुमिच्छति । )

अश्वपतिः— राजर्षे ! इंद्रजालमेवैतत् ।

द्युमत्सेनः— ( सनिःश्वासं । ) हा कुतस्तादृशी भाग्यसंपन्मे । नाल्पपुण्यप्राप्या हि पवित्रमित्रसंगतिः । ( इत्यश्रूणि मुंचति । )

नेपथ्ये— हा प्राणनाथ भगवन् सत्यवन् ! मत्पाणिग्रहणसमये सहचरेयं सहचरेयं सहचरेयमिति सत्यमुक्त्वापि कथमिदानीं स्वकीयां वाचमलीकां कुरुषे ।

नीतिवल्लभः– ( श्रुतिमभिनीय स्वगतं। ) श्रूयंते किल कोकिल-कुहूकोमलानि पुनस्तानि तस्या विलपितानि। तदितो दक्षिण-कुंजस्थया भाव्यं तया। किंच हा भगवन् सत्यवन्निति सखेदमुक्तवत्या तया स्वीया दुःखावस्था सूचिता। पुण्यश्लोकस्य महाराजस्य द्युमत्सेनस्य कुमारः सत्यवन्नामा तदानीमासीत्। तदुपसर्पाम्यवगच्छामि च कास्ति सा कः सत्यवान् कथं तयोः संबंधः क चेदानीं स गतः। (इति परिक्रम्य निर्गतः।)

( ततः प्रविशति सानुतापश्चंडसेनः। )

चंडसेनः–( प्रविश्य। ) विपरीते हि विधौ सर्वं विपरीतव भवति यन्महाजवो मे तुरगोप्यपरिचित इव परित्यज्य मामकस्मात्प्रपलायितः किमिदानीं कर्त्तव्यं। हा दुर्नयप्रियानर्थप्रिययोः प्रधानयोर्दुर्मंत्रांधकारांधनेत्रेण मया न कश्चिन्नीतिमार्गो विलोकितः। प्रजानुरागो हि राज्ञां चिंतारत्नमिति नासत्यं वचः। अनुपार्जितप्रजानुरागचिंतारत्नस्य मे दशेयमागता। क राज्यं क कोशाः क बलानि क वैभवाः क पुत्राः क मित्राणि क कलत्राणि। हा सर्वमपि मे युगपदेव प्रणष्टं। हा हंतेदानीमार्यस्य द्युमत्सेनस्य चरणयुगलमेव शरणं मे। नूनं तदेवैतद्वनं यतोऽविदूर एवार्यभ्रातुर्मे रम्य आश्रमः। ( इति परिक्रामति। )

शैब्या– नाथ! परित्रायस्व परित्रायस्व। सोयं चंडसेन आगतः।

द्युमत्सेनः–( प्रहस्य। ) प्रिये! मा विषीदैंद्रजालमेतत्।

नेपथ्ये– अयि प्राणनाथ! क्वासि देहि मे प्रतिवचनं। हा शौ-

यौदार्यदयोदधे ! हा सत्यसुधासिंधो ! हा सौशील्यसीमशिखरिन् ! हा सौजन्यजन्ययशोधननिधान ! हा एकपत्नीव्रतपवित्रकीर्ते भगवन् सत्यवन् ! कथं प्रतिवचनमपि न वितरसि ।

चंडसेनः– ( स्वगतं । ) अहो केयमतिदुःखिता विलपति ।

नेपथ्ये–अयि भगवन्नपर्णाप्राणबंधो ! अयि भगवति सावित्रि ! अयि सकलाः कुलदेवताः ! न प्रगणय्य मेऽपराधपरंपराः करुणया प्रयच्छत मे प्राणसर्वस्वं ।

चंडसेनः– ( पुनः कर्णं दत्वा । ) नूनमितो दक्षिणस्यां दिशि श्रूयते कलहंसकलकलकोमला वाणी । तदुपसर्पामि तावत् । ( इत्युद्धतं परिक्रामति । )

( ततः प्रविशति शोकावेशविवशः सत्यवान् । )

सत्यवान्– ( सनिःश्वासं । ) हा दैव ! सर्वाणि वनानि सर्वाणि तरुतलानि सर्वाणि सरित्तीराणि चालोक्यालोक्य भूयो भूय इतस्ततो भ्रांत्वा भ्रांत्वा च भृशं श्रांतोहं । हा हंत न क्वापि प्रियाया मे पदपंक्तिरपि लोचनगोचरतां गता मे । ( क्षणं विचिन्त्य परितोवलोक्य च सबाष्पं । )

एतद्वनं ननु तदेव तया मया च<br>
प्रेम्णा दलानि कुसुमानि फलानि सायम् ।<br>
यत्रादरादवचितानि यतोत्र तन्मे<br>
पात्रं त्विदं धनुरिदं परशुश्च सोयम् ॥१६७॥

वीक्ष्यतेत्र यथापूर्वमखिलं खलु कानने ।

न हा मे प्राणसर्वस्वं क्वापि सा प्राणवल्लभा ॥१६८॥
न क्षणं सा तु सप्राणा मम प्राणाधिकप्रिया।
विना मया क्वचित्स्थातुं भीरुर्भीरुतमा क्षमा ॥१६९॥
तन्मन्ये मयि हा निद्रापिशाचीविवशाशये।
घने वनेस्मिन्विजने हिंस्त्रैर्हत हतैव सा ॥ १७० ॥

**शैब्यामालव्यौ**– वत्स! प्रतिहतममंगलं। सैषा प्राणिति प्राणप्रिया ते।

**धौम्यः**– वत्से! शैब्यामालव्यौ! इंद्रजालमेतत्।

**सत्यवान्**– ( सबाष्पं। ) हा मंदभाग्यस्य मे भाग्यविपर्ययात् किं नाम न संभवति। हा हृदयदयिते!

अंतर्हितं किमपि तत्तु पतिव्रतात्वं
धर्मः स कोपि च हतः कुलकामिनीनाम्।
सौशील्यमस्तमितमेव तदप्यचिंत्यं
लोकान् यदि प्रतिगतासि पतिव्रताहान् ॥ १७१ ॥
विद्यापि सातिविनयार्जवधैर्यहृद्या
तत्प्रेमनिष्प्रतिममात्मपतिप्रबद्धम्।
सा कापि हंत गुरुभक्तिरहो प्रणष्टा
लोकान् यदि प्रतिगतासि पतिव्रताहान् ॥ १७२ ॥
सौजन्यमस्तमितमेव हतं च धैर्यं
चातुर्यमाश्रयविहीनमिहाद्य जातम्।
सेयं दया च दयनीयदशावशा ते
लोकान् यदि प्रतिगतासि पतिव्रताहान् ॥ १७३ ॥

अन्याननन्यतुलनांश्च वदान्यतादीन्
कस्मै समर्पयसि तान् सहजान् गुणांस्ते ।
किंवा सहैव वत तैश्चलितासि कांते
कस्यै समर्पयसि दीनममुं जनं च ॥ १७४ ॥
चिंता परास्ति न परं पितरौ तु तौ ते
प्राणप्रिये प्रणयिनौ पितरौ च तौ मे ।
धैर्यं कथं कथमिवैष्यत इत्यसह्या
चिंतास्ति सैव मम चेतसि हा दुरंता ॥ १७५ ॥
आधार एव पतितः कवितालतानां
शुष्का कृपामृतरसस्य च हा प्रपापि ।
सर्वस्वमेव मम सत्यवतः प्रणष्टं
लोकान् यदि प्रतिगतासि पतिव्रतार्हान् ॥ १७६ ॥
हा हा किंनु करोमि कंनु शरणं यामि व्रजामि क्व वा
कं पश्यामि कमालपामि कतमं पृच्छामि यच्छामि किम् ।
गत्वा कुत्र कमत्र वा प्रतिदिनं नत्वा विदित्वाथ किं
कृत्वा किं च पुनर्मम प्रियतमां द्रक्ष्यामि चंद्राननाम् १७७

अयि प्राणप्रिये सावित्रि ! क्वासि । मंदभाग्यममुं जनं विहाय क्व गतासि। देहि मे दर्शनं। ब्रूहि मे प्रतिवचनं । यदि मदीयमंदभाग्यप्राबल्यात्स्वर्लोकमेवोपगतासि तर्हि शून्यः संसारः शून्या दिशः शून्यं च निखिलं महीमंडलं । हा अस्तमुपगतं चेदानीं मंदभाग्यस्य सत्यवतो जीवनप्रयोजनं । प्रिये! मृषा प्रियभाषी खलु सत्यवानिति न चेतसा चिंतनीयं । यस्मिन्

क्षण एवादृश्यदशावशास्मि संपन्ना ततःप्रभृत्येव प्रयाणप्रणयिनोमी मे प्राणाः। परं विना मया गुरुजनानां का दशा भविष्यति कस्तान् संभावयिष्यति कश्च तेभ्यो धैर्यमर्पयिष्यतीति चिंतया मया धीरताशृंखलया शृंखलिता न प्रस्थातुं प्रभवंति ते। हा इदानीं गत्वाप्याश्रमपदं महाराजस्याश्वपतेरार्याया मालव्या आर्याणां पितृचरणानां मातृचरणानां चाग्रे कथमिव मुखं दर्शयिष्यामि किं वदिष्यामि केन प्रकारेण च तानाश्वासयिष्यामीति महती मे चिंता। तद्वरमस्मादनुक्षणानुभवनीयान्मरणाधिकदुःसहदुःखमयाज्जीवनान्मरणमेव शरणमिति मन्येहम्। अयि प्राणाः! न यूयं मे प्राणप्रियातः प्रियास्तत्प्रयात त्वरया माविलंबध्वं।

पितरश्वपते मातर्मालवि प्रणमामि वाम्।
अवांच तात तावेषा चरमा सत्यवन्नतिः॥ १७८॥

(इति विलपन्मूर्छां नाटयति।)

मालव्यश्वपती– (सबाष्पं।)

हा निःसीमोत्तमगुणनिधिर्वत्स एतीह मूर्छां
धिग्धिग् वज्रादपि च हृदयं त्वावयोर्हा कठोरम्।

(इति विलपंतौ मूर्छामुपगच्छतः।)

शैब्याद्युमत्सेनौ– (सोद्वेगं।)

हा हंतास्माद्विरम भगवन्निंद्रजालादिदानीं
नैतद्द्रष्टुं प्रभवति हि नौ दुःसमूर्दोऽन्तरात्मा॥ ३९॥

(इति विलपंतौ मूर्छामुपगच्छतः।)

गौतमः–( सर्वान् शीतोपचारैर्लब्धसंज्ञान् विधाय । ) आर्ये राजर्षे ! महाराजाश्वपते ! आर्ये शैब्ये ! देवि मालवि !

काले बहुतरो यातः प्रातःकालोऽप्युपस्थितः ।
विचार्येति हृदा धैर्यस्थैर्यमालंब्यतां क्षणम् ॥ ६६ ॥

द्युमत्सेनः– भगवन् ! प्रतिक्षणं जायमानोऽपि संतुमर्ह एवेदृशो मंतुर्नः । परमतःपरं भगवदाज्ञैव प्रमाणं नः ।

नीतिवल्लभः–( प्रविश्य स्वगतं । ) सोयं खलु सत्यवान् यं मृगयति भूतलभूषणं सा भामिनी । भवतु द्रुमांतरितो विलोक्य कोयं कस्यायं कथमिमां च दशामुपगत इति निश्चित्य पश्चाद्गमिष्यामि ।

सावित्री– ( सत्वरतरमुपेत्य । ) नन्वस्मिन्नेव निकुंजे मयार्यपुत्रस्यातिगंभीरो विलापविरलाक्षरः स्वर उपश्रुतस्तदत्रैव क्वचित्तेन भाव्यं । ( इति सर्वतो विलोकयति । निपुणं निरीक्ष्य । ) अहो अशोकतरुतले प्राणप्रियो मे मूर्छितः शेते । तदुपसर्पामि । ( इति समीपमुपेत्य सत्यवतश्चरणसंवाहनं कुरुते । )

सत्यवान्– हा प्रिये सावित्रि ! क्वासि ।

सावित्री– नाथ ! एषास्मि समाज्ञापय ।

सत्यवान्– ( सहर्षं स्वगतं । ) अहो प्राणप्रिया मे समागता किं । ( प्रकाशं । ) प्रिये ! क्व गतासीः ।

सावित्री– प्राणनाथ ! अत्रैव स्थितास्मि न कुत्रचिद्गताहं ।

सत्यवान्– तर्हि कश्चिद्दिव्यः पुरुषो मां बबंधेति दृष्टं त्वया ।

सावित्री– नाथ ! न किंचिन्मया तद्विलोकितं । स्वप्नविलसितमेतदखिलमिति मन्येहम् ।

शैब्यामालव्यौ– वत्से सावित्रि ! सम्यगंतरितं तद्वृत्तं।
सत्यवान्– प्रिये ! तर्हि कथमद्यावधि निद्रातो न प्रतिबोधितः।
सावित्री– नाथ ! सांद्रनिद्रं त्वां विलोक्य न प्रतिबोधयितुं मे प्रज्ञा प्राभवत्।
सत्यवान्– नैतत्साधु कृतं। हा हंतांधयोर्मदेकशरणयोर्वृद्धयोः का दशा मे मातापित्रोर्भविष्यति। मन्ये परित्यक्ताः प्राणास्ताभ्यां मद्वियोगेन। हा मदीयमंदभाग्यवशाद्गवति पितरि द्युमत्सेने मातरि शैब्यायां च स्वर्लोकवासमुपगतायां किं मे जीवितेन जन्मना वा फलं। हा जीर्णारण्यमिव शून्यं मे त्रैलोक्यं।
(इति विलपन्मूर्छां नाटयति।)
सावित्री– प्राणनाथ ! समाश्वसिहि समाश्वसिहि। (इति चैलांचलेन वीनयति।)
नीतिवल्लभः– (स्वगतं।)
असंशयं सोयमुदारबुद्धिर्दिष्ट्या द्युमत्सेननरेंद्रपुत्रः।
न चेत्कथं सत्यवतीह चेतः प्रेमामृतार्द्रं मम दृष्टमात्रे ॥१७९॥
तदेनमुपसर्तुमयमवसरः। (समीपमेत्य प्रकाशं।) जयतु जयतु राजपुत्रः।
सत्यवान्– (संज्ञामुपलभ्य निपुणं निर्वर्ण्य च स्वगतं।) कोयं जराजीर्णशरीरः पितेव निर्निमित्तवात्सल्यमार्द्रया दृशा मां विलोकयति। (प्रकाशं।) आर्य ! अभिवादयेऽहं सत्यवान्।
नीतिवल्लभः– शौर्यौदार्यस्थैर्यसमार्जवमहोदधे।
प्रा शहमप्रसादेन भिवान्यं विनयाश्रियः ॥१८०॥

सत्यवान्– आर्य ! क्षंतव्यं मे बालचापलं । निवेदयत्येवांतःकरणमकारणप्रसन्नं मे मदीयहितैषिणं त्वां । तथापि को भवान् कुत इहागतः किमर्थमागतः क कियद्वातःपरं गंतव्यमिति ज्ञातुमिच्छामि ।

सावित्री– ( स्वगतं । ) आर्य द्युमत्सेन इव भक्तिभरव्हं भवति मे स्वांतमस्मिन् जने । )

नीतिवल्लभः– ( स्वगतं सहर्षास्रं । ) अमृतरसनिर्विशेषाणि वत्सस्य वचांसि प्रीणयंत्यंतरात्मानं मे । ( प्रकाशं । ) राजपुत्र ! सोहं खलु नीतिवल्लभो भवदीयतातचरणानामनुचरपरमाणुः ।

सत्यवान्– ( सहर्षाश्चर्यमुत्थाय सांजलिबंधं । ) अहो आर्यनीतिवल्लभ ! सुदिनमिदं मे भवद्दर्शनानंदेन । बहूनि किल कष्टानि भवद्भिरनुभूतान्यस्मदर्थं सकुटुंबैश्च कारागारकुटुंबिताप्यनुभूता चिरमिति प्रतिदिनं वदंति पितृपादा मे ।

नीतिवल्लभः– राजपुत्र गतमेतत्सर्वं न स्मर्तव्यमिदानीं किंचित् । अद्य सायंसमय एव भवत्पितृपादानुरक्ताभिः प्रजाभिर्बलाद्राज्यपदभ्रष्टः कृतश्चंडसेनः ।

( ततः प्रविशति चंडसेनः । )

चंडसेनः– ( स्वगतं । ) हा नीतिवल्लभोपि किमत्र प्राप्तः । दुर्लभ इदानीं द्युमत्सेनस्यानुग्रहो मयि । यो मया कारागृहेद्यावधि व्द्ध आसीत् स कथं मयि द्युमत्सेनस्यानुग्रहं कारयेत् । (सत्यविलोक्य ।) कोयमार्यद्युमत्सेननिर्विशेषाकृतिः कुमारः । मन्ये राजद्युमत्सेनस्यैवायं कुमारः । कथमितरथा तादृशमाकृति-

साम्यं संभवेत् । भवतु । विटपांतरितः शृणोमि नीतिवल्लभकुमार-
योर्विश्रब्धजल्पितानि । ( इति परिक्रामति । )

सत्यवान्– ( सविषादं । ) हा आर्यस्य चंडसेनस्य तादृशी दशा-
द्य संवृत्ता । धिग्दैवं । सांप्रतं क स आर्यः क तत्कलत्राणि क
तत्पुत्राः क तन्मित्राणि च संतीति किंस्विज्जानते भवंतः ।

नीतिवल्लभः– वत्स सत्यवन् ! पुत्राः कलत्राणि मित्राणि
च तस्य तत्रैव नगरे संति परं स्वयं चंडसेनः कचिद्बहिर्निर्ग-
तोस्तीति श्रुतं मया प्रजामुखात् ।

सत्यवान्–(सबाष्पं ।) हा क स आर्यो भविष्यति का वा तस्ये-
दानीं वने दशा भविष्यति कमलकोशकोमलचरणतलश्च कथमिव
कठिनतमास्वरण्यस्थलीषु विकटास्वटवीषु दुर्गमासु पर्वततटीषु
चाटिष्यति । रक्षतु परमकारुणिकः परमेश्वरोऽपर्णाप्राणनाथो
राजपदभ्रष्टमार्यं तमिति प्रणामसहस्रार्पणपूर्वा प्रार्थना मे ।

नीतिवल्लभः– ( स्वगतं । ) जागर्ति काप्यप्रतिमा परदुःखदुःखि-
तास्य कुमारस्य ।

चंडसेनः– ( स्वगतं । ) धन्यतमं हि सौजन्यमनन्यमस्य कुमार-
स्यार्जवं ।

सत्यवान्–आर्य नीतिवल्लभ !

नीतिवल्लभः– आज्ञापयतु कुमारः ।

सत्यवान्– भवद्भिर्नगरे गत्वा वक्तव्या मद्वचना मता सर्वा । न
मे पितृपदभ्रंशतो राजदेशिका प्रीतिर्नापि पितृपादानामपि
स्मरणस्मरणसरसीरुहमकरंदानुभावाद्राज्यसुखं प्रियं तदार्य-

श्चंडसेन एव सुखमनुभवतु राज्यपदस्येति । किंचाहमार्यपद-स्पर्शेनैव शपे न राज्यपदवांछा मे स्वप्नेपि हृदये स्फुरतीति। ततो यतःकुतश्चिदप्यानीयार्यश्चंडसेन एव राज्यपदेभिषेक्तव्य इति ।

नीतिवल्लभः— राजपुत्र ! अवन्मतमेवानुसरति मतिर्मे परं प्रजा नैवं स्वीकरिष्यतीति निरुपायोहं ।

चंडसेनः— ( स्वगतं । ) वत्सस्य सत्यवतः प्रकृतिरतिसरला कोमला दयार्द्रा जन्मसिद्धसौजन्यपरतंत्रा च प्रतिभाति । धिङ्मां तादृशेपि कृतापराधं । समर्पणीयमिदानीं मयैव तस्मै शपथशतैस्तद्राज्यं । ( प्रकाशं । )

> धन्या मतिः प्रणयसागरसौहृदार्द्रा
> सा वत्स ते सरलतानुपमा च धन्या ।
> धन्या च सा सदयता विनयैकवार्धे
> हे सत्यवन् गुणगणैस्तव निर्जिताः स्मः ॥ १८१ ॥

( इति वदन् सास्रं पादयोः पतति । )

सत्यवान्— ( सविस्मयं । ) आर्य नीतिवल्लभ ! केमी जराजीर्णा अपि मां प्रणमंति ।

नीतिवल्लभः— कुमार ! सोयमार्यश्चंडसेनः ।

सत्यवान्—( सविषादं । ) अहो आर्य ! आर्य ! किमेतत् । नाभिवंदनीयानां प्रणतिर्युक्ता मयि तदहमेवाभिवंदे तातचरणान् । ( इति चंडसेनस्य पादयोः पतति । )

चंडसेनः— ( सबाष्पं सगद्गदकंठं च । ) वत्स ! मज्जामि किल

लज्जाकल्लोलिनीकल्लोलेषु मुखमपि दर्शयन् तत्संतव्यापराधप-
रंपरा मे ।

सत्यवान्– आर्य ! अनुचितमिदमुच्यते तातपादैः । कोपराधो भव-
तां । प्राक्तनकर्माण्येव सर्वेषां सुखदुःखनिदानतामधिगच्छंतीति
नाविदितं वः ।

चंडसेनः– वत्स ! स्वीकृत्य स्वीयं राज्यं मामपारत्रपाकूपारपूरे
मज्जंतं समुद्धरेति प्रार्थना मे ।

सत्यवान्– आर्य ।

युष्मासु राज्याधीशेषु संतोषो हृदि योस्ति मे ।
यश्च मे तातपादानां स नाधीशोप्यहो मयि ॥ १८२ ॥

तस्मादार्यचरणैरेव तत्पाल्यं ।

चंडसेनः– नैवं भविष्यति कदाचित् । बहुकालं हि पालितं तन्मया
तदिदानीं तपोवनसेवनमेव रोचते मे ।

सत्यवान्–भवतु । तातपादा एव मे तत् स्वीकर्तुं न स्वीकर्तुं वा प्र-
माणं । अधुना तु तेषां चिंतयैवाहं व्यग्रोस्मि तदनुमन्यध्वमा-
श्रमं प्रतिगमनाय मां । ( इति प्रणमति । )

चंडसेनः– वत्स ! साधयतु भवान् संतु ते शिवाः पंथानः ।

नीतिवल्लभः– अस्ति सज्जोश्वस्तमारुह्य गच्छतु वत्सः ।

सत्यवान्– आर्य नीतिवल्लभ ! दूरदेशभ्रमणपरिश्रांता एते तात-
चरणा एवारोहंतु तमश्वमार्येणापि तेनैव सह शनैःशनैर्ग-
तव्यमहमप्यनुपदमेवागमिष्यामि ।

नीतिवल्लभः– कुमार ! यथात्वदाज्ञं कुर्वः । ( इति चंडसेनेन सह निष्क्रांतः । )

सत्यवान्– प्रिये ! सत्वरतरमतिचिंतातुरं चेतो मे मातापितृदर्शनाय तदिमं फलपात्रं पुष्पाणीधनानि चात्रैव संस्थाप्य केवलं धनुः शरं परशुं च गृहीत्वा गच्छावः ।

सावित्री– यथाज्ञार्यपुत्रस्य । ( इत्युक्त्वा सशरं धनुः स्कंधे धृत्वैकया भुजलतया परशुमन्यया च भुजलतया सत्यवत्करं गृहीत्वा निष्क्रांता । )

द्युमत्सेनाश्वपतिशैब्यामालव्यः– अहो वत्सस्य विनयातिरेकोऽपकारपरेष्वपि नरेषु विशृंखलं विजृंभते ।

ऋषयः– न केवलं विनयातिरेको निर्व्यलीका दयालुता च ।

द्युमत्सेनः– अहो कुतो नस्तादृशं भाग्यं येनैतदिंद्रजालं सत्यं भवेत् । किं पुनः पवित्रया पुत्र्या सावित्र्या सहितं वत्सं सत्यवंतं मेक्षिष्ये ।

गौतमः–( सहर्षमुत्थाय । ) राजर्षे द्युमत्सेन ! महाराजाश्वपते ! देव्यौ शैब्यामालव्यौ ! मान्या महर्षयश्च ! नैतदिंद्रजालमितरेंद्रजालसाधारणं मंतव्यं । भूतार्थदर्शकमेवैतदिंद्रजालमिति शैब्याद्युमत्सेनयोर्दृष्टिप्राप्तिरेव निवेदयति तथापि संशयश्चेत्

पश्यंतु यूयं सर्वेपि साक्षात्प्रीतिपुरःसरम् ।
सावित्र्यालंबितो वत्स एष आयाति सत्यवान् ॥६७॥

सर्वेपि– ( सानंदं पश्यंति । )

**सत्यवान्**– (प्रविश्य।) प्रिये ! स्वस्थोस्मि सांप्रतं मुंच मां एते तपोवनवासिभिर्मुनिभिः सह तातपादा दृश्यंते ।

**सावित्री**– नाथ ! तथा करोमि । (इति सत्यवंतं मुंचति ।)

**सत्यवान्**– (दूराद्विलोक्य सानंदाश्चर्यं ।) प्रिये ! संप्राप्तनेत्ररत्ना इव लक्ष्यंते तातचरणाः ।

**सावित्री**– प्राणनाथ ! नैतच्चित्रं निर्व्यलीकभक्तिभरपरितोषितपरमेश्वराणां तेषां । यतः–

दीनबंधौ दयासिंधौ शरणागतवत्सले ।
प्रसन्ने पार्वतीप्राणवल्लभे किन्नु दुर्लभम् ॥ ६८ ॥

**सत्यवान्**– (अग्रतो गत्वा ।) पितरौ ! प्रणमामि ।

**शैब्याद्युमत्सेनौ**–(सहर्षास्रमाश्लिष्य ।) वत्स ! परमेश्वरप्रसादेन दृष्टोसि ।

**सावित्री**– पितरौ ! प्रणमामि ।

**शैब्याद्युमत्सेनौ**–वत्से ! निःसीमसौभाग्यसंपद्भ्याः । पूर्वजानां पुण्यैर्दृष्टासि । (इति सास्रमाश्लिष्यतः ।)

**गौतमः**–वत्सौ ! अयं महाराजोश्वपतिरियं च देवी मालवी तत्प्रणमतं तौ ।

**सावित्रीसत्यवंतौ**– (साश्चर्यानंदं ।) आर्याः! सोयमवितर्कितोलब्धलाभः । (इति प्रणमतः ।)

**मालव्यश्वपती**– (सानंदास्रं ।) वत्सौ ! अनुभवतमनुदिनममंदामानंदपरंपरां ।( इत्याश्लिष्यतः । )

सत्यवान्– अयि दयामयास्तपोवनमुनयः ! प्रणमामि वः ।
मुनयः– सावित्रीमिव पावित्र्यपातिव्रत्यपरां वराम् ।
लभस्वानन्यलभ्यां त्वं सुस्थिरं विजयश्रियम् ॥६९॥
सावित्री– भगवंतः ! प्रणमामि वः ।
मुनयः– वत्से ! निःशृंखलाः श्रेयःपरंपराः समुल्लसंतु ते ।
( ततः प्रविशतश्चंडसेननीतिवल्लभौ । )
चंडसेनः–( साश्चर्यं । ) सखे नीतिवल्लभ ! दिष्ट्या । आर्यः प्राप्ताभिनवनेत्र इव दृश्यते ।
नीतिवल्लभः–( सानंदाश्चर्यं । ) न केवलं महाराजो देव्यपि प्राप्ताभिनवनेत्रा लक्ष्यते ।
उभौ–( अग्रतो गत्वा । ) जयतु जयतु महाराजो देवी च ।)
द्युमत्सेनः–( सहर्षमुत्थाय । ) एहि चंडसेन! दिष्ट्या दृष्टोसि परिष्वजस्व मां । एहि नीतिवल्लभ! दिष्ट्या चिराद्दृष्टोसि परिष्वजस्व मां । (इत्यानंदाश्रूणि मुंचन्नुभौ परिष्वजेते ।)
शैब्या– वत्सौ ! चंडसेननीतिवल्लभौ ! चिरंजीवतं ।
द्युमत्सेनः– वत्सौ ! महाराजोयमश्वपतिः परमं मित्रं संबंधिवर्यश्च नः । तदेनं परिष्वजेथां ।
चंडसेननीतिवल्लभौ– ( सानंदं तथा कुरुतः । )
चंडसेनः– ( सांजलिबंधं सवाष्पं । ) आर्य ! क्षंतव्या दुर्नयप्रियानर्थप्रिययोः प्रधानयोर्दुर्मंत्रांधकारांधनेत्रस्य मेऽपराधपरंपरा । मज्जामि लज्जाजलधौ मुखमपि दर्शयन् । ( इत्यश्रूणि मुंचति । )

द्युमत्सेनः– वत्स ! कस्तेपराधः प्रधानयोर्वा। स्वकृतकर्मपरिणामपरतंत्रा एव सर्वे प्राणिन इति नाविदितं ते।
चंडसेनः– सांप्रतं स्वीयं सिंहासनमधिरुह्य कृतार्थं कुरुत मां।
नीतिवल्लभः– अप्रत्याख्येयोयं चंडसेनस्य विनयः।
द्युमत्सेनः– विरक्ताः खलु वयमिदानीं चलदलचंचलेष्वनेकविधमदनिवासेषु राजलक्ष्मीविलासेषु। तद्वत्सेनैव सानुभूयतां।
चंडसेनः–यदि मे मंदभाग्याच्चेद्वैराग्यानंदनिर्भराः।
आर्या नेच्छंति तर्ह्येनां पातु वत्सोद्य सत्यवान् ॥७०॥
द्युमत्सेनः– वत्स ! त्वमपि मे ज्येष्ठः सत्यवान्।
अश्वपतिः– एवमेतच्छोभते भ्रातृधर्ममर्मज्ञानां भवादृशां।
नीतिवल्लभः– ( स्वगतं। ) निष्प्रतिमा कापि महाशयता महाराजस्यास्य।
मुनयः– अद्भुतमेवैतद्भ्रातृवात्सल्यं राजर्षेः।
चंडसेनः– ( स्वगतं। )

धिङ्मां धिङ्मे मतिं धिङ्मे संगतिं चापि दुर्जनैः।
योहमीदृशवात्सल्यधुर्येष्वार्येष्वमाचरम् ॥ ७१ ॥

( प्रकाशं। )
न केवलमहं भक्त्या दातुं राज्यं समुत्सुकः।
प्रजा अप्यखिला युष्मान् राज्यस्थान् द्रष्टुमुत्सुकाः॥ ७२॥

नीतिवल्लभः—यथार्थेयमार्यस्य चंडसेनस्योक्तिः।

चंडसेनः— शपे युष्मच्चरणयोरार्ययुष्मान्विना त्वहम्।
नेच्छामि राज्यं स्वं प्राज्यं स्वाराज्यं चापि सांमतम् ७३
गतः स कालो यत्रासीत्संगस्त्वत्संगभंगकृत्।
सेवामेवाद्य सर्वस्वं मन्ये युष्मत्पदाब्जयोः॥ ७४॥

किंबहुना। यदि वांछसि सोदरं स्वकीयं
भुवि जीवंतममुं तु चंडसेनम्।
वह राज्यधुरं तदा स्वकीयां
करुणाब्धे परिपाहि च प्रजाः स्वाः॥ ७५॥

(इत्यश्रूणि मुंचन् पादयोः पतति।)

द्युमत्सेनः— वत्स! यद्येवमत्याग्रहस्ते तर्हि
मया सत्यवता चाहं सहामीभिर्महर्षिभिः।
एकेन दुर्धरां राज्यधुरं धर्तोस्मि सांमतम्॥७६॥

चंडसेनः— सोयं भूयाननुग्रहः।

अश्वपतिः— राजर्षे! श्लाघनीयतमोयं विचारस्ते।

सत्यवान्— दिष्ट्या पश्यामि सर्वान् कुशलिनो युष्मान्।

द्युमत्सेनः— वत्स! सोयं भगवतो गौतमस्य महात्मनां चामीषां मुनीनामनुग्रहः।

गौतमः— वत्सायाः सावित्र्याः पातिव्रत्यप्रभाव एव प्रायः सर्वेषां श्रेयसां मूलम्।

सत्यवान्— (स्वगतं।) मत्स्वप्नानुरूपेयं भगवतो गौतम-

स्योक्तिस्तत्पृच्छामि तावत्स्वप्नफलं। (प्रकाशं।) भगवन्नद्य मध्यान्होत्तरं समित्पाटनपरिश्रमश्रांतेन निद्रावशेन च मया दृष्टः कश्चिद्दुःस्वप्नः।

गौतमः– वत्स! क इव।

सत्यवान्– गले पाशेन बध्वा मां चकर्ष भगवान् यमः।

गौतमः– ततस्ततः।

सत्यवान्–संमोचितश्च साविञ्या प्रार्थनानियुतैरहम्॥७७॥

गौतमः– ततस्ततः।

सत्यवान्–अपश्यन् विपिने तां च विलपन् करुणं रुदन्।
पर्यभ्रमं प्रतिलतं प्रतिकुंजं प्रतिद्रुमम् ॥७८॥

गौतमः– ततस्ततः।

सत्यवान्–भगवन्! ततः प्रबुद्धो न किंचिदपश्यं। तत्कीदृक् फलोयं स्वप्न इति ज्ञातुमिच्छामि।

गौतमः– वत्स नायं हि ते स्वप्नः सर्वमासीत्तथैव तत्।
मोचितोसि च सत्या त्वं सत्यवन् सत्यमेतया॥७९॥
अशक्तत्वं शरीरस्य मनसश्च विलोक्य ते।
न वेद्मि किंचिदित्युक्तं त्वया संपृष्टया तया॥८०॥

सत्यवान्– (स्वगतं।) बहूपकृतं मयि प्रियया। (प्रकाशं।) भगवन्! भवद्वचसैवैतदवगतं मया।

गौतमः– नैतावदेव।
नष्टां दृष्टिं पुनरुपगतौ निर्मलां यद्गुरू ते
राज्यं भक्त्यार्पयति परया यत्स्वयं चंडसेनः।

प्राप्स्यत्येषा सुतशतमियं मालवी चेदशेषं
पातिव्रत्याचरणफलितं वत्स विद्धि त्वमस्याः ॥८१॥

**सत्यवान्**– ( स्वगतं । ) अहो न केवलं मय्येवोपकृतमनया मे प्रियतमया किंतु गुरुजनेष्वप्यनुपम उपकारो निर्मितः ।

प्रियाकृतोपकाराणां विधातुं प्रत्युपक्रियाम् ।
अपि स्वल्पामहं कल्पः कल्पकल्पायुषापि किम् ॥८२॥

( प्रकाशम् । ) भगवन् ! नन्वेवमेतत् । )

**शैब्याद्युमत्सेनौ**– वत्से ! मनोवचोगोचरमुपकृतं किमप्यस्मासु वत्सया । ( इति सानंदं परिष्वजेते )

**सावित्री**– ( सलज्जमधोमुखी । ) सर्वोऽप्ययं युष्माकं पुण्यप्रभावः काहं वराकी ।

**मालव्यश्वपती**– वत्से ! पावितं प्रख्यापितं समुद्धृतं च कुलद्वयं वत्सया । ( इति सानंदबाष्पं पुनः परिष्वजेते । )

**सावित्री**–मातः पितः ! सर्वोऽप्ययं प्रभावो भगवतो नारदस्य तदुपदिष्टस्याखिलव्रतचक्रचूडामणेर्वटसावित्रीव्रतस्य च न मे किंचित् ।

( ततः प्रविशति व्योममार्गेण नारदः । )

**नारदः**–

आकल्पं विमलं यशोऽचलवरं भूमंडले स्थापितं
स्वर्गानंदपरंपरानुभवभाग्वंशद्वयं निर्मितम् ।

पातिव्रत्यपवित्रमार्गमहिमासंदर्शितोयं यया
.सावित्री कुलभूषणं क खलु सा तां द्रष्टुमीहामहे॥८३॥

सर्वेपि– अहो स्मृतिमात्रसाध्यसान्निध्यो दयानिधिर्भगवा-
न्नारद एवोपस्थितः किं। सुदिनमिदं नः। (इति सानंदमु-
त्थाय प्रणमंति।)

नारदः–निःशृंखलानि श्रेयांसि समनुभवंतु भवंतः सर्वेपि।

सत्यवान्– प्रणतप्राणिजातपारिजात भगवंस्तपोनिधेऽभि-
वंदेहं सत्यवान्।

नारदः– वत्स! शौर्यौदार्यदयाधैर्याद्यसंख्यगुणभूषणः।
प्रतापतापितारातिर्भव भूभामिनीविभुः ॥८४॥

सावित्री– भगवन्! प्रणमत्येषा ते धर्मपुत्री सावित्री।

नारदः– वत्से! –इंद्राणीव महेंद्रेण पत्या सत्यवता सह।
अमंदानंदसंदोहमनुभूयाः शतं समाः ॥८५॥

आब्रह्मालयमाशिवालयमथावैकुंठलोकं तथै-
वोर्ध्वं सप्तसु सप्तसु स्थिरमधोलोकेषु तद्वासिनः।
यावच्चंद्रदिवाकरं प्रतिदिनं गायंतु ते निर्मलं
वत्सेऽशेषपतिव्रतागणमणेश्चित्रं चरित्रं त्विदम्॥८६॥

किंच स्वकीयाप्रतिमपातिव्रत्यप्रभावोपार्जिताशेषाशिषे स-
कलमप्याशीःप्रदानं पुनरुक्तमिव वत्सायै। तथाप्युच्यतां
किं ते भूयः प्रियमुपकरोमि।

सावित्री– किमतःपरमपि प्रियं मे।

नष्टां दृष्टिं पुनरुपगतौ निर्मलां यद्गुरू मे
प्राज्यं राज्यं श्वशुर इह मे लप्स्यते यत्स्वकीयम् ।
पित्रोः पुत्रा मम च शतशो यद्भविष्यंति पत्यु-
र्दीर्घं चायुस्तदखिलमिदं त्वत्प्रसादान्मुनींद्रो ॥८७॥

तथापीदमस्तु

वर्षत्वंबुधरा धरा च निखिला पूर्णास्तु धान्यैर्धनै-
र्विद्वद्रत्नपरीक्षका नृपतयः पांतु प्रजाः प्रेमतः ।
एधंतां कविशक्तयश्च कविताः स्त्रीधर्मबोधप्रदाः
कल्याणानि कुलस्त्रियोप्यनुभवंत्वात्मीयधर्माश्रयात् ॥

सर्वेपि– ( निष्क्रांताः । )

इति सेंद्रजालः सप्तमोंकः ॥

---

समाप्तमिदं सावित्रीचरितंनाम छायानाटकम् ।

---

श्रीविठ्ठलात्मजनुपोर्द्धशशांकमौले-
र्दासस्य वर्यगुरुकेशवधर्मसूनोः ।
एषा कृतिर्मम तु शंकरलालबंधो-
र्गौरीगिरीशपदयोः कुसुमांजलिः स्यात् ॥ १ ॥

कृत्यानया निखिलया प्रणतप्रियः श्री-
शैलाधिराजतनयापतिरस्तु तुष्टः ।
तुष्यंतु चात्मसुकृतार्जितशंकरैक्य-
मुक्तिश्रियो गुरुवराः करुणार्णवा नः ॥ २ ॥

---

# शुद्धिपत्राणि ।

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | १ | गौरीशंभोः | गौरीशंम्भोः |
| २ | ३ | स्मार्यपुत्र | स्म्यार्यपुत्र |
| ४ | ३ | बभ्रामतुः | बभ्रमतुः |
| ७ | १ | साक्षातत्कृत | साक्षात्कृत |
| ७ | २ | अश्वपति | अश्वपतिः |
| ८ | ११ | तस्याप्यवस्था | तस्या अप्यवस्था |
| १२ | ५ | निपुणतरत्तां | निपुणतरतां |
| १२ | १२ | रत्नसमूहं | यत्नसमूहं |
| १४ | १२ | विरमित्र | वीरमित्र |
| १४ | २२ | दिगुतीर्णा | दिगुत्तीर्णा |
| १५ | २२ | शालिन्यं | शालिन्य |
| १८ | १८ | निर्वण्य | निर्वर्ण्य |
| २० | १४ | मधःक्षिप्य | मधः प्रक्षिप्य |
| २७ | १९ | तस्याःफल | तस्याः फलं |
| २८ | ८ | व्यकुर्वतः | व्यपकुर्वतः |
| ३२ | १८ | शानवेंद | शानैर्वेद |
| ३६ | ११ | कुशांकालिते | कुशाकलिते |
| ३६ | १९ | कथवा | कथं वा |
| ४२ | १० | प्रथ्वी | पृथ्वी |
| ४४ | ६ | मे | मम |
| ४५ | २० | गृहित्वा | गृहीत्वा |
| ४६ | १ | यद्भेपि | यदुभे अपि |

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
| --- | --- | --- | --- |
| ४६ | १६ | तादृशानां | तादृशीनां |
| ४७ | १२ | मृतृदारिके | भर्तृदारिके |
| ४८ | १८ | ववुपोनामये | वपुपोनामयं |
| ५० | २ | भजिप्यत्येव | व्रजिप्यत्येव |
| ५३ | १४ | प्रसाद | प्रसादा |
| ५४ | २ | मंगलि | मंगल |
| ५६ | २१ | तत्रा | तत्रा |
| ५८ | ११ | किमप्य | किमप्य |
| ६० | ११ | चरित्रा अस्मि | चरित्रास्मि |
| ६० | १७ | प्रियसखा | प्रियः सखा |
| ६० | २० | संदेशितव्यं | संदेष्टव्यं |
| ६१ | ६ | तपोधना | तपोधनाः |
| ६२ | २१ | गृहित्वा | गृहीत्वा |
| ६३ | ४ | शंसयो | संशयो |
| ६७ | ९ | त्याशासते | त्याशास्ते |
| ७१ | १९ | अपश्यावः | अपश्याव |
| ७२ | ६ | नायिप्यति | नेप्यति |
| ७५ | ९ | मात्मनोर्मंद | मात्मनो मंद |
| ७६ | ७ | पितैव | पितेव |
| ७७ | १४ | साधीयस्तम | साधिष्ठ |
| ७८ | १२ | कि हेयं | किं हेयं |
| ७८ | २० | स्थान | स्थानं |
| ८३ | २१ | संबंध | संबंधं |
| ८५ | ९ | प्रतिमे | प्रतिज्ञे |

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ९० | १९ | वंघोः | वंघोः |
| ९० | २० | जिरीश | गिरीश |
| ९५ | १६ | सहाय्यं | साहाय्यं |
| ९६ | १४ | प्राकेवति | प्रोक्तवति |
| ९८ | १७ | सहाय्य | साहाय्य |
| ९९ | ४ | सहाय | साहाय्य |
| ९९ | २० | द्युमत्सेन | द्युमत्सेन |
| १०१ | १५ | प्रियसखा | प्रियः सखा |
| १०२ | १० | प्रज्ञावान | प्रज्ञावान् |
| १०४ | ९ | प्रावाचन् | प्रावोचन् |
| १०४ | " | दवेव्रतः | देवव्रतः |
| १०४ | १० | प्रकारण | प्रकारेण |
| १०४ | ११ | च्चत् | चेत् |
| १०५ | ११ | मेताद्वषये | मेतद्विषये |
| १०६ | २० | मातृपित्रो | मातापित्रोः |
| १०६ | २१ | हृदयं | हृदये |
| १०६ | २२ | पपिता | पतिता |
| १०८ | १९ | महागजो | महाराजो |
| ११७ | १२ | अहोतिशेते | अहो अतिशेते |
| ११७ | १५ | यां | यो |
| ११८ | ७ | कानिचिद्ररत्नानि | कानिचिद्रत्नानि |
| ११९ | ७ | वानि | याणि |
| १२१ | ६ | सदसा | सदृशा |
| १२५ | ६ | कर्त्रिमं | कृत्रिमं |

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ११८ | २० | परंत्वयो | परं न त्वयो |
| १३३ | ११ | संदेशितव्यं | संदेष्टव्यं |
| १३५ | २ | वीक्षतां | वीक्षितुः |
| १३५ | १३ | सेवंती | संसेव्ये |
| १३६ | ४ | वियोग | वियोगेन |
| १३७ | १५ | पितृचरणैः | पितृचरणैः |
| १३७ | १९ | ग्रहग्रहीतेवा | ग्रहगृहीतेवा |
| १३७ | २१ | पितृचरणसनो | पितृचरणसेना |
| १४० | १९ | वृत्तांतमेतव् | वृत्तांतमेतम् |
| १४१ | २ | विलोकविष्यामः | विलोकयिष्यामः |
| १४१ | ३ | मपाकुर्वंति | मपाकुर्वंति |
| १४२ | १६ | प्रणा इति | प्राणा इति |
| १४३ | ६ | सव व्यथा | सैव व्यथा |
| १४३ | २० | निष्कलैव | निष्फलैव |
| १४४ | १ | समाह्वयितुं | समाह्वातुं |
| १४४ | १५ | समाह्वयितुं | समाह्वातुं |
| १४९ | १५ | माह्वयितुं | माह्वातुं |
| १५० | १८ | समाह्वयते | समाहूयते |
| १५२ | १९ | ग्रहग्रहीते | ग्रहगृहीते |
| १५३ | ५ | उभा | उभे |
| १५५ | ६ | नं | न |
| १५५ | ८ | ववुपः | वपुपः |
| १५८ | १७ | रुसं | रूक्षं |
| १६१ | १४ | इत्युभौ | इत्युभे |

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १६२ | १५ | शुशीला | सुशीला |
| १६३ | ३ | मायाणप्रणतिः | प्रयाणप्रणतिः |
| १६३ | १२ | दशानुभूतव्या | दशानुभवितव्या |
| १६५ | ७ | माकालयितासि | माकलयितासि |
| १७७ | १५ | कवीनां शक्तिः | कवीनां कवित्वशक्तिः |
| १७७ | २१ | स्वातं | स्वाते |
| १७९ | १ | भूपतु | भूपयतु |
| १७९ | १ | नुभवतां | नुभवतं |
| १८१ | ८ | शंकरलालबधो | शंकरलालबंधो |
| १८८ | ८ | मदिय | मदीयं |
| १८९ | १ | अपरधाः | अपराधाः |
| १९३ | ७ | परशुणा | परशुना |
| १९४ | १२ | पितृचरणां | पितृचरणानां |
| १९८ | ११ | वहिष्याव: | यक्ष्यावः |
| १९९ | १६ | निषेमो | निमेषो |
| २०१ | ८ | सये | समये |
| २०२ | १९ | गुरुनिर्दत्तैः | गुरुभिर्दत्तैः |
| २०७ | १५ | श्वसुरौ | श्वशुरौ |
| २११ | ४ | मुकारं | मुपकारं |
| २११ | १५ | मेत्युक्तं | ममेत्युक्तं |
| २१२ | १७ | ससये | समये |
| २१२ | १८ | मैत्रेयो | मैत्रेयी |
| २१४ | ४ | प्राथयामि | प्रार्थये |
| २१४ | ९ | ज्ञाता | ज्ञातां |

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २१४ | ९ | नयिष्यासि | नेष्यसि |
| २१९ | १० | आशिर्भि | आशीर्भि |
| २२१ | २ | पृथग्पृथग् | पृथक्पृथक् |
| २२३ | ३ | क.श्चित् | कश्चित् |
| २२४ | १० | सारथिनं | सारथिं |
| २२४ | ११ | सज्ज | सज्जं |
| २२४ | २० | संदेशितव्यं | संदेष्टव्यं |
| २२६ | १३ | सारथिन् | सारथे |
| २२६ | १७ | सारथी | सारथिः |
| २२८ | १४ | समये | समये |
| २२९ | १० | आशिर्भि | आशीर्भि |
| २३० | १५ | अर्या | आर्या |
| २३२ | ४ | श्रणुवो | शृणुवो |
| २३२ | १६ | दाशिः प्रभावात् | दाशीःप्रभावात् |
| २३३ | ८ | ऐहि | एहि |
| २३३ | ९ | इतस्तः | इतस्ततः |
| २३३ | १८ | त्यभ्यर्थयामि | त्यभ्यर्थये |
| २३५ | १४ | प्रतिगिरिं | प्रतिगिरि |
| २३६ | १८ | क | कं |
| २३७ | ८ | नन्विष्यतः | विचेष्यतः |
| २३७ | ९ | मृगयिष्यंति | मृगयिष्यंते |
| २३८ | १५ | दर्शयिष्योमि | दर्शयिष्यामि |
| २४० | ११ | नत्ररत्नयोः | नेत्ररत्नयोः |
| २४० | १४ | पलब्धिः | पलब्धिः |

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २४० | २१ | तदागमनांतरा | तदागमनंतरा |
| २४३ | १० | भरजद्वाज | भरद्वाज |
| २४३ | १५ | दुःपरिणती | दुष्परिणति |
| २४४ | २ | विस्मर्यो | विस्मार्यो |
| २४४ | १४ | माशिः प्रभावः | माशीःप्रभावः |
| २४६ | २ | वलोवय | वलोक्य |
| २४७ | ३ | नासायं | नसायं |
| २५२ | १० | परधिनः | पराधिनः |
| २५४ | १२ | नर्दं | नंद |
| २५६ | ४ | ब्राह्मणनां | ब्राह्मणानां |
| २५६ | १५ | जाता जातां | जाता जाता |
| २५६ | ४ | ग्राता | माता |
| २५९ | १ | लप्स्यामि | लप्स्ये |
| २५९ | १४ | तच्छिक्षामसह्यां | तद्दंडमसह्यं |
| २६० | ८ | धिङ्मे मतिः | धिङ्मे मतिम् |
| २६२ | १२ | मुद्यमते | मुद्यच्छते |
| २६३ | २१ | मगच्छावः | मगच्छाव |
| २६४ | ४ | जरीजृंभते | जरीजृंभीति |
| २६४ | १९ | तत | ततः |
| २६५ | १६ | इत्याश्लिप्तु | इत्याश्लेष्टु |
| २६८ | १६ | नयिष्यामि | नेष्यामि |
| २६९ | १३ | तद्वेत्तुं | तज्ज्ञातुं |
| २७१ | १८ | हृदरिश् | हृदीशम् |
| २७३ | ६ | शिवाः | शिवः |

| पृष्ठांकः | पंक्त्यंकः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २८६ | ९ | घापो | चाप |
| २९७ | ९ | विपरीतव | [illegible] |

## पुनरवलोकनं

| | | | |
|---|---|---|---|
| ३ | २ | दास्यमंगीकर्तुते | दास्यांगी |
| ३ | १३ | चेंद्रसेन | चंद्रसेन |
| ३ | १७ | चेंद्रसेन | चंद्रसेन |
| २५ | १५ | वरिष्ठोप्पेति | वरिष्ठोप्येति |
| २८ | १ | परशतानपि | परःशतानपि |
| ४० | ११ | परशतैः | परःशतैः |
| ४१ | १४ | परिवृत्तो | परिवृतो |
| ५८ | २१ | मविविवेक | मविवेक |
| ६७ | ८ | योत्कंठते | योत्कंठंते |
| ७९ | २० | मविस्मर्य | मविस्मार्य |
| ११५ | २१ | विलोक्ये | विलोक्ये |
| १२० | १८ | दंपतीभ्यां | दंपतिभ्यां |
| १२२ | १३ | दंपतीधर्मान् | दंपतिधर्मान् |
| १२८ | १७ | सावित्री | सावित्रि |
| १४६ | ६ | यदनुसारिण | यदनुसरण |
| १५७ | २१ | गीयतां | गीयंतां |
| १६२ | ३ | समर्प्यते | समर्प्येते |
| [illegible] | | ३६ | ३५ |
| | | यो | यां |